(१५)

*राजते वनराजिभिर्वसुधा समन्तात् ।*
*प्रावृषीव पतिप्रिया प्रमदा समन्तात् ।।१।।*
*वर्त्मभिस्तृणसङ्कुलैश्चलतां जनानाम् ।*
*गम्यविभ्रमशालिनां क्षणदा समन्तात् ।।२।।*
*वारिभिः परिपूरितेषु सरःसु मग्ना ।*
*पद्मिनी रमणीदृगुत्सवदा समन्तात् ।।३।।*
*वृष्टिजलपिच्छिले वर्त्मनि यान्ति सर्वे ।*
*गर्भभरमन्दा इव प्रमदाः समन्तात् ।।४।।*
*पल्वलेषु पतन्ति शिशुसङ्घाः प्रसन्नाः ।*
*उन्नतस्थलतोऽन्वहं बहुधा समन्तात् ।।५।।*

**भावार्थ** - लता-पादपों से सब ओर वर्षाकाल में धरती सुशोभित है, जैसे प्रियतमा युवती सर्वथा वर्षाकाल में सजी दीखती है । (क्योंकि वर्षाकाल में दूर रहने वाले पति भी प्रियतमा से मिलने आते ही हैं) ।।१।।

घास से भरी राहों से चलने वाले लोग अपने गन्तव्य से भटक जाते हैं, उनके लिए सब तरफ रात (जैसा) दृश्य होता है। अर्थात् जैसे रात के अन्धेरे में लोग रास्ता भूलकर अपने गन्तव्य को नहीं पहुँच पाते उसी तरह वर्षा ऋतु में रास्ते पर घास जम जाने के कारण लोग गन्तव्य से भटक जाते हैं ।।२।।

जलों से भरे तालाबों में डूबे कमल वन सब ओर सुन्दरी नारी की आँख जैसे कमल दिखलाकर मानों कामिनी के नेत्र दर्शन रूप उत्सव प्रदान करता है ।।३।।

सब ओर वर्षा के पानी से फिसलन भरी राह पर सब लोग उसी तरह चलते हैं जैसे गर्भ के अतिशय भार से धीरे धीरे चलती नारी हो ।।४।।

प्रतिदिन सब जगह बहुत से बच्चे के झुण्ड ऊँचे स्थान से पानी भरे गड्ढे में छलांग लगाते हैं ।।५।।

ooooo

(१६)

*शब्दगुणमाकाशमखिलं वीक्षते ।*
*शैलमथ सूचीसमविलं वीक्षते ।।१।।*
*कामिनामिह दृष्टिरतिसूक्ष्मा सखे ।*
*प्रमुग्धालिकपोलसुतिलं वीक्षते ।।२।।*
*व्रजन्तीनां रमणवसतिं योषिताम् ।*
*वयस्या ह्यनुकूलमनिलं वीक्षते ।।३।।*
*प्रावृषि प्रियमभिसरन्ती पथि निशि ।*
*विद्युता स्थलमथो सलिलं वीक्षते ।।४।।*
*स्तेनकुलतीक्ष्णातिविस्मयकारिदृक् ।*
*अमाया ध्वान्तेऽपि निखिलं वीक्षते ।।५।।*
*धीवरो जलधिं विशन्नागामिनम् ।*
*हितं वा प्रतिकूलमनिलं वीक्षते ।।६।।*
*योगिनांकुलमात्मबुद्धिबलेन वै ।*
*दुर्विपाकं मोहकलिलं वीक्षते ।।७।।*
*दुःखजलधौ मज्जमानो द्वैतभाक् ।*
*धिया कैवल्याय कपिलं वीक्षते ।।८।।*

**भावार्थ** - आकाश का गुण शब्द है, वह आकाश सब कुछ देखता है। वह पर्वत तथा सूई के समान छिद्र को भी देखता है। अर्थात् आकाश सब यह होता है।।१।।

हे मित्र ! कामी जनों की दृष्टि अत्यन्त सूक्ष्म होती है, जो प्रमुग्धा नायिका के कपोल में सुन्दर तिल को देख लेती है।।२।।

प्रियतम स्थान को जाती हुई नायिकाओं की सखी अनुकूल हवा देख लेती है ।।३।।

वर्षा ऋतु में प्रेमी के पास अभिसार को जाती हुई नायिका रात में बिजली की चमक से स्थल तथा जल देख लेती है ।।४।।

चोरों की बहुत तेज तथा अतिशय आश्चर्यकारी दृष्टि अमावस्या के अन्धकार में भी सब कुछ देख लेती है ।।५।।

मल्लाह समुद्र में प्रवेश करते समय आने वाले अनुकूल अथवा प्रतिकूल पवन भाँप लेता है ।।६।।

योगियों का समूह अपने बुद्धि-बल से मोह के दलदल का खराब परिणाम निश्चय देख लेता है ।।७।।

दुःख के सागर में डूबता हुआ द्वैतवादी (सांख्य मतावलम्बी) कैवल्य (मोक्ष) के लिए कपिल को देखता है। अर्थात् कपिल मुनि के सांख्य दर्शन के अनुसार अपना मत स्थिरकरते हैं ।।८।।

oooo

(१७)

*कामिनीकमनीयकायं पश्यति ।*
*दैन्यमत्रविसारि नायं पश्यति ।।१।।*
*वर्धमानं कोशमनिशं श्रीमताम् ।*
*वीक्ष्य शुभमभितोऽधुनायं पश्यति ।।२।।*
*शस्यसम्पदमात्मनो भूभागजाम् ।*
*वप्तृकुलमागाम्युपायं पश्यति ।।३।।*
*जलौघाहतवेश्मपशुकृष्यादिकः ।*
*सर्वकारीयं सहायं पश्यति ।।४।।*
*स्वीयमतिलाभं जनो न हि मन्यते ।*
*स्वल्पमपि परकीयमायं पश्यति ।।५।।*
*अन्यदीयमनल्पदोषमलं सखे ।*
*मक्षिकावृत्तिः सदायं पश्यति ।।६।।*
*नवोद्वाहा कामिनी कथमन्वहम् ।*
*भानुमन्तमुपेक्ष्य सायं पश्यति ।।७।।*

**भावार्थ** - प्रमदा नायिका के मनोहर शरीर को तो यह (देश का कर्णधार) देखता है, किन्तु फैलती हुई (बढ़ती हुई) गरीबी यह नहीं देखता।।१।।

धनवानों के दिनानुदिन बढ़ते खज़ाने को देखकर, आजकल चारों ओर खुशहाली को ही यह देख पाता है।।२।।

अपने खेतों में पैदा होने वाली फसल को ही बोने वालों का समूह (कृषक वर्ग) आने वाले समय में जीवनोपाय देखता है।।३।।

बाढ़ में नष्ट हुए घर, पशु खेती आदि वाला कृषक वर्ग सरकारी सहायता की ओर देखता है ।।४।।

अपना बहुत बड़ा लाभ भी लोग नहीं मानता, लेकिन थोड़ी भी दूसरे की आय देखने लगता है ।।५।।

हे मित्र ! दूसरे को अतिशय दोषरूप मल को मक्खी का व्यवहार वाला यह हमेशा देखता है ।।६।।

नवविवाहिता प्रमदा प्रतिदिन क्यों सूर्य के प्रकाश का तिरस्कार कर शाम की प्रतीक्षा करती ? ।।७।।

ooooo

(१८)

*दूरमथ गन्तव्यमधुना ।*
*नोचितं स्थातव्यमधुना ।।१।।*
*नैशतमसावृतमरण्यम् ।*
*नो किमपि द्रष्टव्यमधुना ।।२।।*
*वञ्चका अथ हिंसका अपि ।*
*जीवनं त्रातव्यमधुना ।।३।।*
*वर्त्म विस्मयकारि बुद्ध्या ।*
*पदं विनिधातव्यमधुना ।।४।।*
*उलूको हुं हुं विधत्ते ।*
*श्रोत्रमपिधातव्यमधुना ।।५।।*
*शिवा रुतमशिवं प्रकुरुते ।*
*नापरं श्रोतव्यमधुना ।।६।।*
*श्वापदव्याप्तं वनं किल ।*

*किमग्रे सर्त्तव्यमधुना ।।७।।*

*करं धेहि मदीयमबले ।*

*गाढमाश्लिष्टव्यमधुना ।।८।।*

भावार्थ - अब और भी दूर जाना है। इस समय रुकना अच्छा नहीं है।।१।।

रात के अन्धकार से वन ढका हुआ है, इस समय कुछ भी दिखाई नहीं पड़ता ।।२।।

ठग भी हैं, हिंसक भी हैं, इस समय (इनसे) बचना है।।३।।

चत्कारपूर्ण रास्ता है, इस समय जानबूझ कर कदम रखना है।।४।।

उल्लू "हूँ हूँ" आवाज़ कर रहा है। इस समय कान बंद करना चाहिए ।।५।।

सियार अशुभ (खराब) आवाज़ कर रहा है, इस समय कुछ भी सुनाई नहीं देता ।।६।।

हिंसक जंगली जानवरों से भरा हुआ यह वन है, क्या इस समय आगे बढ़ना चाहिए ? ।।७।।

हे प्रिये ! मेरा हाथ पकड़ लो । इस समय गाढ़ आलिङ्गन करो ।।८।।

ooooo

(१६)

*दूरभाषेणास्मदीयं जीवनम् ।*

*कुटुम्बं वेत्त्यन्यदीयं जीवनम् ।।१।।*

*नो मनो रमते प्रियालापे क्वचित् ।*

*पुस्तकेन च चिन्तनीयं जीवनम् ।।२।।*

*वेश्म निर्जनमाकुलं कुरुते मुहुः ।*

*येन केन च जीवनीयं जीवनम् ।।३।।*

*चिन्तनं न हि युज्यते सततं बहु ।*

*कर्म विरतमकल्पनीयं जीवनम् ।।४।।*

*जराव्याधिविमर्दितं सुखलोलुपम् ।*

*स्तम्भितं वत निन्दनीयं जीवनम् ।।५।।*

*सन्ततीनां चिन्तयाऽतिव्याकुलम् ।*

*ताभिरेवोपेक्षणीयं जीवनम् ।।६।।*

*अर्पितं येभ्यस्तदर्थं भारकृत् ।*
*धिक् तदेवं मानवीयं जीवनम् ।।७।।*

**भावार्थ** – दूरभाष (फोन, मोबाईल) से ही हमारा जीवन है, परिवार हमारा जीवन दूसरा ही समझ बैठा है ।।१।।

अपनी प्रिया (पत्नी) के साथ बातचीत में कभी मन नहीं लगता। पुस्तक के माध्यम से कुछ चिन्तन में जीवन बीतता है।।२।।

आदमी के बिना घर बारबार व्याकुल कर देता है, जिस किसी तरह यह जीवन जीया जा रहा है ।।३।।

हमेशा बहुत चिन्तन करना सम्भव नहीं होता। काम के बिना यह जीवन अकल्पनीय है ।।४।।

बुढ़ापा, बीमारी से परेशान सुख के लिए लालायित निन्दनीय यह जीवन रुक सा गया है ।।५।।

सन्तानों की चिन्ता से यह जीवन अत्यन्त व्याकुल रहता है, किन्तु उन्हीं सन्तानों के द्वारा यह जीवन उपेक्षा के लायक बन गया है ।।६।।

जिनके लिए यह जीवन अर्पित हुआ, उन्हीं के ऊपर यह बोझ बन गया है। उस तरह के मानव जीवन को धिक्कार है।।७।।

ooooo

## (२०)

*दधाति मोदमव्ययं कदा मदीयमानसम् ।*
*धनागमेऽपि लोलुपं सदा मदीयमानसम् ।।१।।*
*प्रयाति दूरमन्तिकं च समायाति तत्क्षणम् ।*
*जवीय एव भाति सर्वदा मदीयमानसम् ।।२।।*
*अपेक्षते न यानमाशुगामि तत्र किञ्चन ।*
*भवेदमातमोऽपि वा यदा मदीयमानसम् ।।३।।*
*तदद्य सागरान्ततीरदेशमेत्य मोदते ।*
*प्रयाति शैलशृङ्गमन्यदा मदीयमानसम् ।।४।।*
*वियन्निशीथनाथविम्बमाददाति सस्पृहम् ।*

*बिभेति मृत्युतो यदा कदा मदीयमानसम् ।।५।।*
*लभेत वैभवं समुन्नतिं च कोऽपि मानवः ।*
*प्रतीक्ष्य तत्समत्सरं तदा मदीयमानसम् ।।६।।*
*निसङ्गयोगमभ्यसन् समर्चयन्नपि प्रभुम् ।*
*भवाम्यथोऽपि चञ्चलं तदा मदीयमानसम् ।।७।।*
*क्वचिद्बलेन यौवनेन बुद्धिवैभवेन वा ।*
*मदान्धतामुपैति सम्पदा मदीयमानसम् ।।८।।*

**भावार्थ** - मेरा मन कब नित्य खुशी को धारण करता है? धन लाभ में भी लालची मेरा मन होता है ।।१।।

यह दूर भागता उसी समय समीप जाता है, मेरा मन हमेशा अतिशय चञ्चल ही मालूम पड़ता है।।२।।

जब अमावस का अन्धकार भी हो तब भी यह मेरा मन शीघ्रगामी किसी सवारी की अपेक्षा नहीं करता ।।३।।

वह आज सागर के अन्त के देश में जाकर प्रसन्न होता है और दूसरे क्षण पर्वत के शिखर पर मेरा मन चला जाता है।।४।।

यह मेरा मन आकाश में चन्द्रमण्डल को स्पृहा के साथ पकड़ लेता है, और यदा कदा मृत्यु से भी डरता है।।५।।

कोई आदमी सम्पत्ति प्राप्त करता है और उन्नति को पाता है तो उसे देखकर उस समय मेरा मन ईर्ष्या से युक्त हो जाता है।।६।।

संगरहित या निर्विकल्पक योग का अभ्यास करता अथवा प्रभु की आराधना करता हुआ भी मैं होता हूँ, फिर भी मेरा मन उस समय चञ्चल रहता है ।।७।।

कहीं बल से, कहीं युवावस्था से कहीं बुद्धि की सम्पत्ति से अथवा कहीं धन से मेरा मन मदान्धता को प्राप्त कर लेता है।।८।।

ooooo

(२१)

*दिगन्तदेश वर्त्तिनी द्युतिर्विभाति मे ।*
*शनैः शनै र्विसारिणीं रतिं ददाति मे ।।१।।*
*चिरादिदं प्रतीक्षमाणमानसं सखे ।*

अमन्दमोदमद्य सद्य आदधाति मे ॥२॥
जरादिवाधितं वपू रुजादिपीडितम् ।
हठादिदं निशम्य वैक्लवं जहाति मे ॥३॥
निमज्जते च दुःखवारिधौ क्षणेन यत् ।
तदेव चाऽऽनिशम्य मङ्गलं चकास्ति मे ॥४॥
कुटुम्बभारकृद् भयावहं निरर्थकम् ।
अमोघमद्य जीवनं स्वतो विभाति मे ॥५॥

**भावार्थ** – मुझे दिशा के अन्त देश में रहने वाली रोशनी प्रतीत हो रही है, जो धीरे-धीरे फैलनेवाली प्रीति (प्रसन्नता) मुझे दे रही है ॥१॥

हे मित्र ! बहुत दिन से मेरा यह प्रतीक्षा करता हुआ मन आज अतिशय खुशी को सीधे पा लेता है ॥२॥

बुढ़ापे से परेशान और रोग से पीड़ित यह मेरा शरीर अचानक विकलता को छोड़ रही है ॥३॥

दुःख के सागर में जो कुछ क्षण पूर्व डूब रहा था वही मन शुभ सुनकर चमक उठता है ॥४॥

जो मेरा जीवन परिवार के लिए बोझ, भयावह, निरर्थक था, वही स्वतः अब सार्थक या सफल प्रतीत हो रहा है ॥५॥

ooooo

## (२२)

प्रसूनं सहकण्टकं जनजीवनम् ।
रहस्यं सहनाटकं जनजीवनम् ॥१॥
महार्हं शोभाकरं सदभीष्टदम् ।
सुरत्नं सहहाटकं जनजीवनम् ॥२॥
विशालं सौविध्यसंयुक्तं शुभम् ।
सुहर्म्यं सहभाटकं जनजीवनम् ॥३॥
ज्ञानविज्ञानान्वितं गरिमास्पदम् ।

*बहुरहस्योद्घाटकं जनजीवनम् ।।४।।*
*दुःखदं सुखसंयुतं करुणामयम् ।*
*सुवृत्तानां टङ्ककं जनजीवनम् ।।५।।*

**भावार्थ** - मानव जीवन काँटों से भरा फूल है, यह मानव जीवन नाटक से मिश्रित रहस्य है ।।१।।

जनजीवन बड़ा कीमती, शोभाधायक, सुन्दर मनोवांछित प्रदान करने वाला, मूल्य के साथ सुन्दर रत्न है ।।२।।

विशाल, सुविधा से भरा, सुन्दर मंगलदायक जनजीवन सुन्दर महल है जहाँ (साँस का) भाड़ा देना पड़ता है ।।३।।

ज्ञान-विज्ञान से युक्त गरिमापूर्ण बहुत से रहस्यों का उद्घाटन करने वाला यह जनजीवन है ।।४।।

दुःखदायक, सुख से युक्त, करुणापूर्ण तथा बहुत सारी घटनाओं को टंकित करने वाला यह मानव जीवन है ।।५।।

ooooo

## (२३)

*रतिरताया अधरदलपानं मनोज्ञम् ।*
*कुसुममभितो भ्रमरकलगानं मनोज्ञम् ।।१।।*
*कुसुमशरविद्धप्रियाया मदनसदनम् ।*
*सुरुचि वदनं विगलदभिमानं मनोज्ञम् ।।२।।*
*प्रमदवनलीलारतं बहुधालिवृन्दम् ।*
*निजनिजप्रियकृतसमाधानं मनोज्ञम् ।।३।।*
*शिशिरशैत्यसमाकुलं बहुकामियुगलम् ।*
*हृतवसनमपि गतव्यवधानं मनोज्ञम् ।।४।।*
*प्रकृतिपीडितजनसहायं वहति यदिदम् ।*
*गगनचरमपि तत्पवनयानं मनोज्ञम् ।।५।।*

*सदयभावनया सुनामीपीड़ितेभ्यः ।*
*मखशतादतिफलं धनदानं मनोज्ञम् ।।६।।*
*घनतिमिरवनदिग्भ्रमितजनसंविदर्थम् ।*
*क्षितिजसंश्रितरविकिरणभानं मनोज्ञम् ।।७।।*

**भावार्थ** - कामक्रीड़ा में तल्लीन नायिका के अधरदल का पान अत्यन्त मनोरम होता । फूल के चारों तरफ भौंरे का मधुरगुञ्जन मनोहर होता है ।।१।।

कामदेव के बाण से विद्ध प्रियतमा का काम का आश्रय रुचिकर, चेहरा अभिमान या अहंकार से रहित होने पर मनोहर होता है ।।२।।

प्रमदवन में (पार्क आदि में) क्रीड़ा में रमी हुई अनेक प्रकार की सखियों का समूह अपने-अपने प्रेमी से संलग्न हो मनोरम प्रतीत होता है ।।३।।

शिशिर ऋतु की ठंढी से व्याकुल अनेक कामुकों का जोड़ा वस्त्ररहित होता हुआ भी अबाधित रहकर मनोहर प्रतीत होता है।।४।।

जो यह पवन यान (वायुयान) प्राकृतिक आपदों से पीड़ित लोगों के लिए सहायता सामग्री ढोता है, अतः आकाश में होता हुआ भी वह मनोहर होता है ।।५।।

दयायुक्त भावना से सुनामी पीड़ित लोगों के लिए धन-दान सैकड़ों यज्ञों से अधिक फल देने वाला अच्छा है।।६।।

घने अन्धकारयुक्त वन में दिग्भ्रमित लोगों के सही दिशाज्ञान कराने के लिए (पूर्व) क्षितिज में स्थित सूर्य की किरणों की प्रतीति अच्छी है ।।७।।

ooooo

## (२४)

*मृगमदमुग्धमिदं मृगयूथम् ।*
*अटति अरण्यमिदं मृगयूथम् ।।१।।*
*तृणमपि सुलभमितो न ततः किम् ।*
*चरति सगन्धमिदं मृगयूथम् ।।२।।*
*आतनुतां खलदलमतिजालम्।*
*विशति मुहुस्तदिदं मृगयूथम् ।।३।।*

*लुब्धकभयमुत वन्यभयं किल ।*
*भवति न भिन्नमिदं मृगयूथम्।।४।।*
*शावकहरणमथ स्वहरणमिह ।*
*तदपि न खिन्नमिदं मृगयूथम् ।।५।।*
*श्रुतिसुखदं छलनापररवमपि ।*
*वेत्ति सुगीतमिदं मृगयूथम् ।।६।।*
*वञ्चितमतितरमनेकधाऽलम् ।*
*तदपि सनन्दमिदं मृगयूथम् ।।७।।*
*त्यजति न वीक्ष्य जगन्निजचरितम् ।*
*कथमनवद्यमिदं मृगयूथम् ।।८।।*
*वितरति नयनश्रियं तथापि न ।*
*निश्छलभावमिदं मृगयूथम् ।।९।।*

**भावार्थ** - यह मृग का झुण्ड कस्तूरी के मद से मुग्ध है। यह जंगल में भटकता फिरता है ।।१।।

यहाँ वहाँ सुलभ घास भी यह मृग का झुण्ड गर्व के साथ (या गन्धयुक्त होने के कारण) नहीं चर पाता ।।२।।

शत्रु वर्ग (शिकारी का गिरोह) विशाल जाल फैला दे, फिर भी बार-बार उसमें प्रवेश कर जाता है या फंस जाता है ।।३।।

शिकारी का भय तथा जंगली जानवर का भय हो फिर भी यह मृग का झुण्ड अलग-अलग नहीं होता ।।४।।

बच्चे का हरण हो अथवा अपना भी हरण हो, फिर भी यह मृग का झुण्ड दुःखी नहीं होता ।।५।।

कर्णप्रिय ठगी से भरी आवाज को भी मृग का झुण्ड सुन्दर गीत समझ बैठता है ।।६।।

अनेक बार पर्याप्त बहुत ठगा हुआ भी यह मृग का झुण्ड होता है, फिर भी खुश रहता है ।।७।।

यह मृग का झुण्ड संसार को देखकर (भी) अनिन्दनीय अपना चरित्र क्यों नहीं छोड़ता ? ।।८।।

अपनी आँख की शोभा तो बाँटता है फिर भी यह मृग का झुण्ड अपना छलरहित भाव (लोगों में) क्यों नहीं बाँटता है ? ।।६।।

ooooo

(२५)

*कचाचिताऽबला कृशा दीना ।*
*चिनोति किञ्चिदत्र सा दीना ।।१।।*
*कुटुम्बभारमुद्वहन्तीयम् ।*
*दुनोति भाविचिन्तया दीना ।।२।।*
*शुनाऽनुगम्यमानया मन्दम् ।*
*समं प्रयाति वत्सया दीना ।।३।।*
*न वस्त्रमङ्गसञ्छदायालम् ।*
*विजृम्भते बुभुक्षया दीना ।।४।।*
*भवेदमाऽथ पूर्णिमा वापि ।*
*तमोवृताऽस्त्यनुत्सवा दीना ।।५।।*
*विसृष्टकल्मषस्थितोच्छिष्टे ।*
*वियुध्यते समं शुना दीना ।।६।।*
*तिरस्कृताऽखिलैरियं सद्यः ।*
*हसत्यशेषमद्य सा दीना ।।७।।*
*विभाति भारतं यदित्युक्तम् ।*
*निशम्य तत्सविस्मया दीना ।।८।।*

**भावार्थ** - केश से व्याप्त दुर्बल दीन दुःखी यह अबला नारी है। वह दीन अबला यहाँ कुछ चुन रही है ।।१।।

यह अपने परिवार का बोझ ढोती हुई भावी चिन्ता से दुःखी हो रही है ।।२।।

कुत्ता उसका पीछा करता है, वह अबला धीरे-धीरे अपनी बच्ची के साथ जा रही है ।।३।।

अपने अंगों को ठीक से ढकने के लिए उसके पास काफी वस्त्र नहीं है। वह अबला भूख से जम्हाई ले रही है ।।४।।

अमावस्या हो या पूर्णिमा हो, वह अबला अन्धकार से भरी उत्सव रहित रहती है ।।५।।

फेंकी गई गन्दगी की ढेर पर स्थित जूठन पर कुत्ते से लड़ती है। अर्थात् उस जूठन को एक तरफ कुत्ता खींचता एक तरफ वह खींचती ।।६।।

यह सबों के द्वारा तिरस्कृत है, आज यह अबला सब पर सीधे उपहास कर रही है ।।८।।

"यह भारत वर्ष चमक रहा है" यह जो कहा गया है, उसे सुनकर यह अबला नारी चकित है ।।९।।

ooooo

(२६)

*दीनदृशं दधाति सा बाला ।*
*शुचमधिकं ददाति सा बाला ।।१।।*
*कृशकायं शिशुं निधायाऽङ्के ।*
*पथि मन्दं प्रयाति सा बाला ।।२।।*
*हिमहतपद्मिनीव तारुण्ये ।*
*युवतिपदं जहाति सा बाला ।।३।।*
*गिरितुहिनस्थलीभवा पिङ्गा ।*
*व्रततिरिवावभाति सा बाला ।।४।।*
*खलभुक्तोज्झिता समाजस्य ।*
*क्रूरकृति र्विभाति सा बाला ।।५।।*
*पथ्युपलस्थले कृशा दीना ।*
*अटति वृथा पदातिसा बाला ।।६।।*

*विरसनिसर्गचारुसर्वाङ्गी ।*
*मम मनसो न याति सा बाला ।।७।।*

**भावार्थ** - वह बाला दीन दृष्टि धारण करती है, वह अतिशय शोक दे रही है। अर्थात् उसे देखकर काफी तकलीफ़ होती है।।१।।

अपनी गोद में दुबले पतले-बच्चे को रखकर रास्ते पर धीरे- धीरे वह बाला जा रही है ।।२।।

वह बाला बर्फ से मारी गई कमलिनी की भाँति युवावस्था में ही युवती का पद छोड़ रही है अर्थात् बूढ़ी दीख रही है ।।३।।

पहाड़ी बर्फीली जमीन पर उगी हुई पीली लता की भाँति वह बाला प्रतीत हो रही है ।।४।।

किसी दुर्जन के द्वारा उपभोग कर परित्यक्त वह बाला समाज की निर्दय कृति प्रतीत हो रही है ।।५।।

पथरीली राह पर दीन दुर्बल वह बाला निष्प्रयोजन पैदल भटक रही है ।।६।।

रसहीन स्वभाव से सुन्दर सब अंगों वाली वह बाला मेरे मन से नहीं जा रही है ।।७।।

ooooo

(२७)

*घनघटासङ्कुलव्योमनि दामिनीव ।*
*चञ्चला द्युतिरेति चेतसि कामिनीव ।।१।।*
*कूजितेन करोति पिककुलमाकुलं माम् ।*
*मुधा नोऽवसरं गमय बहुमानिनीव ।।२।।*
*चिरप्रतीक्षा यत्कृते समुपैति सा माम् ।*
*कौमुदीमुदिता मनोहरयामिनीव ।।३।।*
*जलकलशमुदवहन्ती काचिन्नवोढा ।*
*मन्दमन्दमुपैति पथि गजगामिनीव ।।४।।*
*समुत्सुकता मदीया भवतादिदानीम् ।*
*परीक्षा छात्रस्य शुभपरिणामिनीव ।।५।।*

**भावार्थ** – मेघ की घटा से व्याप्त आकाश में बिजली की भाँति, कोई चञ्चल ज्योति मेरे मन में प्रमदा नायिका की भाँति आ रही है ।।१।।

कोयल समूह अपने कूजन से मुझे व्याकुल कर रहा है, अत्यन्त मानवती नायिका की भाँति बेकार में अवसर मत गमाओ।।२।।

जिसके लिए बहुत दिन प्रतीक्षा थी वह मेरे पास उसी तरह आ रही है, जैसे चन्द्रकिरण से प्रसन्न सुन्दर रात हो ।।३।।

पानी के घड़े को ढोती हुई कोई नवविवाहिता युवती रास्ते पर धीरे-धीरे गज गामिनी की तरह समीप से गुजर रही है ।।४।।

इस समय मेरी उत्कण्ठा उसी तरह सफल हो, जैसे कोई परीक्षा सुन्दर परीक्षाफल से सफल मानी जाती है।।५।।

ooooo

(२८)

*यदपि गतं न गातुकामोऽहम् ।*
*शुचि मलिनं विधातुकामोऽहम् ।।१।।*
*मितमपि ते स्मितं सुधास्यन्दि ।*
*लभमानो न यातुकामोऽहम् ।।२।।*
*मदिरदृशाऽवलोकनं सौम्ये ।*
*वितर बहूनि हातुकामोऽहम् ।।३।।*
*वचनमिदं तवामृतं मत्वा ।*
*दिवसनिशं च पातुकामोऽहम् ।।४।।*
*वदनमिदं कचाकुलं द्रष्टुम् ।*
*शतमायूंषि दातुकामोऽहम् ।।५।।*
*करयुगलेन षट्पदाद्भीतो ।*
*मुकुलयुगं पिधातुकामोऽहम् ।।६।।*
*अधररसं निपीय सानन्दम् ।*
*सखि सहसा प्रयातुकामोऽहम् ।।५।।*

**भावार्थ** – जो भी गुजर गया, उसे मैं गाना नहीं चाहता, गन्दे को मैं स्वच्छ करना चाहता हूँ ।।१।।

थोड़ी भी तेरी अमृत टपकाने वाली मुस्कान पाता हुआ मैं जाना नहीं चाहता ।।२।।

हे सुन्दरी ! अपनी मतवाली नज़र से देखती रहो, (इसके लिए) मैं बहुत कुछ छोड़ देना चाहता हूँ ।।३।।

तुम्हारी इस आवाज़ को अमृत मानकर दिन रात पीना चाहता हूँ ।।४।।

केश से उलझे तेरे इस चेहरे को देखने के लिए सैकड़ों उमर देना चाहता हूँ ।।५।।

भौंरे से डरा हुआ मैं अपने दोनों हाथों से दोनों कलियों को ढक लेना चाहता हूँ ।।६।।

हे सखी ! अधर रस का पानकर खुशी के सीधे प्रयाण कर लेना चाहता हूँ ।।७।।

ooooo

(२६)

*मदीयचिन्तने त्वमेव त्वम् ।*
*मदीयजीवने त्वमेव त्वम् ।।१।।*
*न भाति मद्गृहं त्वया हीनम् ।*
*न याति च क्षणं त्वमेव त्वम् ।।२।।*
*न काव्यभावना त्वया हीना ।*
*मम प्रबन्धने त्वमेव त्वम् ।।३।।*
*न वा कलाकृतिस्त्वया हीना ।*
*मदीयकल्पने त्वमेव त्वम् ।।४।।*
*जगन्ति यान्ति मन्दिरद्वारम् ।*
*मदीयवन्दने त्वमेव त्वम् ।।५।।*
*विहाय ते मुखं च काङ्क्षेऽहम् ।*
*न किञ्चिदीक्षितुं दिवानक्तम् ।।६।।*

*मदीयदर्शने त्वमेव त्वम् ।*
*मदीयजीवने त्वमेव त्वम् ।।७।।*
*जपन्ति नाम केचिदत्यन्तम् ।*
*नमन्ति पादयोरनासक्तम् ।।८।।*
*मदीयपूजने त्वमेव त्वम् ।*
*मदीयजीवने त्वमेव त्वम् ।।९।।*
*पठन्ति केचिदत्र सन्देशम् ।*
*वदन्ति वा विचारवैविध्यम् ।।१०।।*
*मदीयजल्पने तवमेव त्वम् ।*
*मदीयजीवने त्वमेव त्वम् ।।११।।*

**भावार्थ** - मेरे चिन्तन में तुम ही तुम हो, मेरे जीवन में तुम ही तुम हो ।।१।।

तेरे बिना मेरा घर नहीं शोभता, तथा एक पल भी नहीं बीत पाता, केवल तुम ही सदा रहती हो ।।२।।

तेरे बिना मुझमें काव्य भावना भी नहीं हो पाती, मेरी प्रबन्ध-रचना में केवल तुम ही विद्यमान रहती हो।।३।।

कोई कलाकृति भी तेरे बिना सम्भव नहीं, मेरी कल्पना में केवल तुम ही हो ।।४।।

संसार मन्दिर के द्वार पर जाते हैं, किन्तु मेरी वन्दना में केवल तुम हो ।।५।।

दिन रात तेरे मुख के बिना मैं कुछ भी देखना नहीं चाहता।।६।।

मेरे दर्शन में केवल तुम ही हो, मेरे जीवन में केवल तुम हो ।।७।।

कुछ लोग (प्रभु का) नाम बहुत जपते हैं और अनासक्त होकर दोनों चरणों पर झुकते हैं ।।८।।

मेरे पूजन में केवल तुम्हीं हो, मेरे जीवन में केवल तुम हो।।९।।

यहाँ कुछ लोग समाचार या सन्देश पढ़ते हैं, अथवा अनेक प्रकार के विचार व्यक्त करते हैं ।।१०।।

मेरी बातचीत में केवल तुम ही रहती हो, मेरे जीवन में केवल तुम हो ।।११।।

ooooo

(३०)

चरता पतत्रिणाम्बरे समतामगामहम् ।
सहसा हि शून्यगह्वरे दयितामगामहम् ।।१।।
विरहानलेन दह्यमानमानसोऽभवम् ।
मदिरेक्षणे सुनिर्झरे रसतामगामहम् ।।२।।
श्रुतिमण्डलस्वरेण हीनगीतकं यथा ।
निपुणागमेन विस्वरे लयतामगामहम् ।।३।।
चिरतृष्णयार्दितो जलागमाशया अटन् ।
सुमरुस्थलेऽतिविस्तरे सरितामगामहम् ।।४।।
रसहीनदीनजीवनं नयन्नहर्निशम् ।
दयिताननें सुधाकरे कवितामगामहम् ।।५।।

भावार्थ - आकाश में विचरण करते हुए पक्षी के साथ बराबरी मैंने पा ली, एकाएक सूने घर में प्रियतमा को पा लिया ।।१।।

विरह की आग से मेरा मन जल रहा था सुन्दर झरने की भाँति मदमाती आँख में सरसता को पा लिया।।२।।

सुर लय ताल से रहित गीत जैसे कुशल कलाकार के आ जाने पर विस्वर में भी लय प्राप्त कर लेता है, उसी तरह मेरे विस्वर जीवन में लय प्राप्त हो गया है ।।३।।

चिरकाल की प्यास से परेशान जल लाभ करने की आशा से भटकता हुआ अत्यन्त फैले विशाल मरुस्थल में नदी को मैंने प्राप्त कर लिया ।।४।।

रसहीन दुःखी जीवन रातदिन बिताता हुआ मैंने प्रियतमा के मुख रूप चन्द्रमा में कविता को प्राप्त कर लिया।।५।।

ooooo

(३१)

सदा मदीय मानसं प्रतीक्षते सुखम् ।
कदापि तन्न शाश्वतं समीक्षते सुखम् ।।१।।
उपैति यात्यनुक्रमेण दामिनीप्रभम् ।

*क्षणं न दर्शनाय तद् विलम्बते सुखम् ॥२॥*
*न कामिनीभुजानुबन्धजं मनोरमम् ।*
*न यामिनीन्दुरश्मिजं हि रोचते सुखम् ॥३॥*
*प्रमुग्धया प्रियेऽपि जल्पने क्वचिन्न हि ।*
*न च प्रियाङ्गनाकटाक्षवीक्षिते सुखम् ॥४॥*
*न पुत्रजन्मनि प्रभूतवैभवागमे ।*
*पदोन्नतिप्रभावजं न वर्तते सुखम् ॥५॥*
*न हर्म्यवाहनादिजातमात्मतुष्टिदम् ।*
*धनादिसञ्चयेऽपि नानुभूयते सुखम् ॥६॥*
*सुखं सदानुसन्दधाति जन्तुजीवनम् ।*
*निजात्मबोधभूमि तद्धि विद्यते सुखम् ॥७॥*

**भावार्थ** – मेरा मन हमेशा सुख की प्रतीक्षा करता है। कभी भी वह शाश्वत सुख ठीक से नहीं देख पाता ॥१॥

सुख बिजली की चमक जैसे क्रमशः आता है और चला जाता है, क्षण भर भी देखने के लिए नहीं रुकता है॥२॥

कामिनी बाहुपाश में बँध जाने से उत्पन्न सुख मनोरम नहीं होता, और न रात के चन्द्रमा की किरण से पैदा हुआ सुख ही भाता है॥३॥

कहीं न तो प्रमुग्धा नायिका के साथ अनुकूल बातचीत में ही सुख है और न मनोरमा प्रिया की तिरछी नज़र में ही सुख है ॥४॥

न तो पुत्र जन्म में सुख है और न पर्याप्त सम्पत्ति लाभ में, न ही पदोन्नति तथा प्रभाव से उत्पन्न सुख ही रह पाता है॥५॥

न तो महल, गाड़ी आदि से उत्पन्न सुख ही आत्म सन्तोषप्रद होता है तथा बहुत धनसंग्रह में भी सुख अनुभव नहीं किया जाता है ॥६॥

प्राणी का जीवन हमेशा सुख की खोज करता फिरता है, किन्तु वह सुख तो अपने आत्मज्ञान में ही विद्यमान है ॥७॥

ooooo

(३२)

*तदीयजीवनं दिशाहीनम् ।*
*न पाययामृतं तृषाहीनम् ॥१॥*
*वसुन्धरा कुटुम्बमस्माकम् ।*
*न जन्यमस्ति विद्विषाहीनम् ॥२॥*
*न विद्यया विना जनो धन्यो ।*
*न रत्नमिष्यते त्विषा हीनम् ॥३॥*
*न हृद्यमाननं विना कान्तिम् ।*
*न चन्द्रचारवं निशाहीनम् ॥४॥*
*हितं न भासते मदान्धस्य ।*
*किमस्ति दर्शनं दृशा हीनम् ॥५॥*
*स्मरातुरापि या कुलोत्पन्ना ।*
*न चेतसा वृणोति सा हीनम् ॥६॥*

**भावार्थ** - उसका जीवन दिशाहीन है। प्यास रहित आदमी को अमृत पान मत कराओ ॥१॥

हमारा परिवार पूरी धरती है। विद्वेष के बिना युद्ध नहीं होता ॥२॥

विद्या के बिना आदमी धन्य नहीं हो पाता। चमक रहित रत्न (भी) इच्छा का विषय नहीं हो पाता ॥३॥

कान्ति के बिना चेहरा मन को नहीं भाता, चन्द्रमा की सुन्दरता रात के बिना नहीं होती ॥४॥

अहंकार से अन्धे आदमी को हितवचन प्रतीत नहीं होता, दृष्टि से रहित देखना क्या है ? ॥५॥

काम से पीड़ित भी जो कुलांगना होती है, वह मन से (कभी भी) कुलहीन जन का वरण नहीं करती ॥६॥

ooooo

(३३)

*प्रोषितायातप्रियो लघु प्रियास्पर्शं काङ्क्षते ।*
*ग्रहीतुं शृङ्गारकाले तदादर्शं काङ्क्षते ।।१।।*
*सङ्गमस्वादानुरक्तं कामुकानां मानसम् ।*
*समग्रं वासन्तवातारक्तवर्षं काङ्क्षते ।।२।।*
*विविक्ते भ्राम्यन् प्रियोऽयं मुग्धया प्रियया समम् ।*
*कौमुदीमुदितां निशं नित्यं सहर्षं काङ्क्षते ।।३।।*
*पल्वलापः पिबत्येवायं जनोऽतिपिपासया ।*
*नैव कामी सङ्गमावसरे विमर्शं काङ्क्षते ।।४।।*
*चारु रूपं प्रियायाः सर्वदा स्यादिति चिन्तयन् ।*
*विशेषज्ञानामिदानीं परामर्शं काङ्क्षते ।।५।।*
*वेशवासं विहायापि प्रसन्नं यूनां कुलम् ।*
*कौतुकागारेऽङ्गनासङ्गमोत्कर्षं काङ्क्षते ।।६।।*
*इदानीं निःशङ्कमभिजाताबलाव्रातं सखे ।*
*मुद्रयासक्तं स्वकीयाङ्गप्रदर्शं काङ्क्षते ।।७।।*

**भावार्थ** – परदेश से लौटे हुए प्रियतम शीघ्र अपनी प्रियतमा का स्पर्श चाहता है। शृंगार के समय उसका दर्पण पकड़ना चाहता है।।१।।

मिलन के स्वाद से अनुरक्त कामीजनों का मन पूरा वर्ष वसन्ती हवा से रमा हुआ चाहता है ।।२।।

मुग्धा प्रियतमा के साथ एकान्त में घूमता हुआ प्रियतम खुशी से चाँदनी से चमकीली रात हमेशा चाहता है ।।३।।

गड्ढे का पानी (भी) अत्यन्त प्यास के कारण यह आदमी पी रहा है। कामी जन संगम के समय विचार विमर्श नहीं चाहता है ।।४।।

'प्रियतमा का सुन्दर रूप हमेशा कायम रहे' यह सोचता हुआ आदमी आजकल सौन्दर्य विशेषज्ञों का सुझाव चाहता है ।।५।।

वेश्यालय को छोड़कर भी आजकल युवक-वर्ग क्लब आदि में प्रमदाओं

के साथ संगम उत्कर्ष चाहता है।।६।।

हे मित्र ! आजकल निर्भय होकर कुलीन नारी का समूह पैसा से आसक्त होकर अपने अंगों का प्रदर्शन चाहता है ।।७।।

ooooo

(३४)

वीक्ष्य वामामहो चञ्चलं मानसम् ।
योगिनोऽप्यत्र किं दुर्बलं मानसम् ।।१।।
दुर्जनाऽऽसङ्गमासाद्य यद्दुर्मदम् ।
तत्सतां सङ्गतौ निर्मलं मानसम् ।।२।।
फुल्लपुष्पं यथा शुभ्ररम्यं शुभम् ।
बाल्यकालेऽखिलं निश्छलं मानसम् ।।३।।
कोमलं सुप्रसन्नं प्रियायां रतम् ।
प्रोषिते भर्त्तरि व्याकुलं मानसम् ।।४।।
काम्यमासाद्य सद्यो मुदामास्पदम् ।
वैपरीत्ये क्षणं विह्वलं मानसम् ।।५।।
दुःख-दैन्यादधीरत्वमापद्यते ।
तत्सदा कुत्सितं निर्बलं मानसम् ।।६।।
निर्वहेज्जीवितेनापि सङ्कल्पितम् ।
तत्प्रशस्यं सखे निश्चलं मानसम् ।।७।।
नोद्विजेद्यत्प्रियं कामिनीकाञ्चनम् ।
सिद्धये कल्पते निष्कलं मानसम् ।।८।।
यत्परस्योन्नतिं नो सहेताधिकाम् ।
सर्वदा तद्धि हेयं मलं मानसम् ।।९।।
जानकीजीवनं ध्यायदेवान्वहम् ।
सर्वसौभाग्यदं मङ्गलं मानसम् ।।१०।।

भावार्थ — आह ! प्रमदा को देखकर मन चञ्चल हो जाता है। योगी जन का भी

मन इस विषय में क्यों दुर्बल है।।१।।

दुर्जन की संगति पाकर जो मन दुर्मद होता है वह सज्जनों की संगति में निर्मल रहता है ।।२।।

बचपन में खिले हुए फूल की तरह स्वच्छ, मनोभावन मंगलकारक सब मन निर्मल होता है ।।३।।

(प्रियतम के संग) प्रियतमा का मन प्रेम में रमा हुआ प्रसन्न और कोमल होता है। प्रियतम के दूर चले जाने पर वही मन व्याकुल हो जाता है ।।४।।

यह मन मनोनुकूल पाकर सीधे खुशियों का घर हो जाता है, विपरीत स्थिति में पल भर में परेशान हो जाता है ।।५।।

(जो) दुःख और गरीबी में धैर्य खो बैठता है,वह मन हमेशा निन्दित और निर्बल होता है ।।६।।

जो जी जान लगाकर अपने दृढ निश्चय का निर्वाह करे, हे मित्र ! वह हमेशा प्रशंसनीय निश्चल मन है ।।७।।

कामिनी और काञ्चन (सोना) जिसे उद्विग्न नहीं करे, वह निष्कलुष मन सफलता के लिए अनुकूल है।।८।।

जो दूसरे की अधिक उन्नति को नहीं सहन कर सके, हमेशा उस मानसिक दोष को त्याग देना चाहिए।।९।।

जो प्रतिदिन सब सौभाग्य को प्रदान करने वाले श्रीराम का ध्यान करता हुआ रहे, वह मन मंगलदायक या शुभ है ।।१०।।

ooooo

## (३५)

*कयाचिदद्य मुग्धया साकम् ।*
*क्षणं नयामि स्निग्धया साकम् ।।१।।*
*कलिन्दनन्दिनीतटाभोगे ।*
*यथा हरिः स राधया साकम् ।।२।।*

निजाङ्घ्रिचापलं तदीयं यत् ।
हृतं दृशापि तद् धिया साकम् ।।३।।
समालपन्त्यसंशयं याऽऽसीत् ।
नताननास्ति सा ह्रिया साकम् ।।४।।
कटुक्वणन्त्यनुक्षणं याऽभूत् ।
कलस्वनाऽस्ति सा भिया साकम् ।।५।।
प्रणम्यपूज्यमान्यहृद्द्वयेषु ।
निरीक्षतेऽद्य तृष्णया साकम् ।।६।।
मुधाऽपनीतजीवनं मन्ये ।
यतो गतं न तत् तया साकम् ।।७।।

**भावार्थ** - किसी प्रेमभरी भोली भाली नायिका के साथ मैं कुछ पल बिता रहा हूँ ।।१।।

यमुना के किनारे के परिसर में जैसे वे भगवान् कृष्ण राधा के साथ होते थे ।।२।।

(किशोरावस्था में) जो उसके अपने पैर की चपलता थी उसे बुद्धि के साथ दृष्टि ने हर लिया। अर्थात् बचपन में जो पैर की चंचलता थी वह अब नज़र में चली आई है ।।३।।

जो निर्भय होकर बातचीत करती रहती थी, वही अब (यौवन में) लज्जा के साथ चेहरे को झुकाई रहती है।।४।।

प्रतिपल कड़वी आवाज़ से जो खनकती होती थी, वही अब मीठी आवाज़ वाली भय के साथ हो चुकी है।।५।।

प्रणाम करने योग्य, पूजनीय, आदरणीय तथा प्रेमीजनों में सबको अब वह प्यासी नज़र से देखती है ।।६।।

चूँकि वह मेरा जीवन उसके बिना बीता, अतः मैं उसे बेकार में बीता हुआ मानता हूँ ।

ooooo

(३६)

*तदीयं मुखं चारु चन्द्रोपमेयम् ।*
*तदक्षिद्वयं पद्मयुग्मोपमेयम् ।।१।।*
*पदं मन्दमन्दं निधत्ते सखीयम् ।*
*अपाङ्गक्षणं तीक्ष्णवाणोपमेयम् ।।२।।*
*कुचद्वन्द्वभारात्पनम्राङ्गमस्याः ।*
*फलव्यापिचूतस्य शाखोपमेयम् ।।३।।*
*नितम्बं बृहन्मांसलं भाति तस्याः ।*
*मनोजस्य सद्यो रथाङ्गोपमेयम् ।।४।।*
*सुरम्यं च जङ्घाद्वयं पुष्टमस्याः ।*
*अनङ्गाध्वरे हेमरम्भोपमेयम् ।।५।।*
*वचो मिश्रमाधुर्यमाह्लादयितृ ।*
*वने कोकिलाकूजितेनोपमेयम् ।।६।।*
*विधेः कौशलोत्कर्षपर्यायभूतम् ।*
*तदीयं वपुश्चास्ति केपोपमेयम् ।।७।।*

**भावार्थ** - उसका सुन्दर चेहरा चन्द्रमा के समान है। उसकी दोनों आँखें दो कमलों के समान हैं ।।१।।

यह सखी धीरे-धीरे कदम रखती है, इसका कटाक्ष तेज बाण के समान है ।।२।।

इसका शरीर दोनों स्तनों के भार से थोड़ा झुका है वह फल से भरी हुई आम की डाल के समान है ।।३।।

उसका विशाल मांसल नितम्ब शोभ रहा है, जो साक्षात् कामदेव के रथ के पहिये की तरह है ।।४।।

इसकी पुष्ट सुन्दर दोनों जांघें, कामयज्ञ में स्वर्णिम केले के थम्भ के समान है ।।५।।

(इसकी) वाणी मिटास भरी आह्लादित करने वाली है, जो जंगल में कोयल की कूक की भाँति है ।।६।।

विधाता के विश्वनिर्माणकौशल की पराकाष्ठा का पर्याय बना उसका शरीर किसके समान है ? अर्थात् उसका शरीर अनुपम है ।।७।।

ooooo

*सामगानं गीयतामिह मन्दमन्दम् ।*
*विस्वरः परिहीयतामिह मन्दमन्दम् ।।१।।*
*शैशवं वधिरीकृतं ध्वनिभिर्विचित्रैः ।*
*अद्य कलमाधीयतामिह मन्दमन्दम् ।।२।।*
*कुड्मलं विकसेदशेषमिदं यथास्वम् ।*
*क्षणं तत्प्रविधीयतामिह मन्दमन्दम् ।।३।।*
*जातिधर्मविवाददूषितचित्तबन्धो ।*
*सद्वचो ननु पीयतामिह मन्दमन्दम् ।।४।।*
*व्याकुलं कोलाहलैरखिलं समन्तात् ।*
*शान्तिरधुना नीयतामिह मन्दमन्दम् ।।५।।*
*भारतं प्रतिभारतं बहुधा श्रुतं तत् ।*
*दीनता ह्यपनीयतामिह मन्दमन्दम् ।।६।।*
*विद्ययाऽमृतमश्नुते तदवेत्य सर्वैः ।*
*जनैः सम्यगधीयतामिह मन्दमन्दम् ।।७।।*

भावार्थ - शान्ति गीत यहाँ धीरे-धीरे गायें। स्वरभंग यहाँ धीरे- धीरे बंद कर दें ।।१।।

विचित्र कोलाहलों से बचपन तो बहरा कर दिया गया । अब धीरे-धीरे मधुर ध्वनि ले आएँ ।।२।।

सारी कलियाँ स्वाभाविक रूप से जिस तरह खिल सके उस पल की व्यवस्था धीरे-धीरे करनी चाहिए ।।३।।

हे जाति धर्म के विवाद से दूषित मन वाले बन्धु ! सही बात धीरे-धीरे पी लो अर्थात् ध्यान से सुनो ।।४।।

सब ओर कोलाहलों से सब व्याकुल है । अब तो शान्ति गीत यहाँ धीरे-धीरे गा लें ।।५।।

'भारत प्रतिभा में (भी ज्ञान में) लगा रहा है' यह तो बहुत सुन चुका, अब तो यहाँ गरीबी धीरे-धीरे दूर करें ।।६।।

'विद्या से अमृत प्राप्त करता' यह जानकर सब लोग सही ढंग से विद्याध्ययन धीरे-धीरे आरम्भ करें ।।७।।

००००० 

(३८)

*विशालवाङ्मयं मयाऽधीतम् ।*
*कवित्वकौशलं धियाऽधीतम् ।।१।।*
*प्रभूतवैभवावलिप्तानाम् ।*
*मनश्चलं धनाय नाधीतम् ।।२।।*
*अवाप्तमात्रतोषशीलानाम् ।*
*सतां मनोऽचलं च नाधीतम् ।।३।।*
*शिशोः स्वमातृतर्जनं हृद्यम् ।*
*विमातृप्रेम नेति नाधीतम् ।।४।।*
*महाततायिनां समाजेऽस्मिन् ।*
*वचो हि दैहिकं धियाऽधीतम् ।।५।।*
*प्रियैः समं सकाममुग्धानाम् ।*
*कटाक्षभाषितं ह्रियाऽधीतम् ।।६।।*
*प्रजाजनानुरञ्जने दक्ष-*
*सुनेतृचापलं श्रियाऽधीतम् ।।७।।*

**भावार्थ** - मैंने विशाल साहित्य का अध्ययन किया। कवित्व की कला बुद्धि से पढ़ी ।।१।।

पर्याप्त सम्पत्ति के घमण्ड में चूर लोगों का धन के लिए चञ्चल मन को नहीं पढ़ा ।।२।।

जितना मिल जाए उसी से खुश रहने वाले सज्जनों का अचल मन नहीं पढ़ा ।।३।।

अपनी माँ की डाँट (भी) बच्चे को प्रिय होता, किन्तु सौतेली माँ का प्रेम नहीं, यह मैंने नहीं पढ़ा ।।४।।

महान् आतंकवादियों के इस समाज में शारीरिक भाषा बुद्धि से पढ़ ली ।।५।।

प्रेमियों के साथ कामुक नारियों के कटाक्ष की भाषा लज्जा से पढ़ ली ।।६।।

प्रजा के लोगों को प्रसन्न करने में चतुर सुन्दर नेताओं की चालाकी उनकी सम्पत्ति से पढ़ ली ।।७।।

०००००

(३६)

पुरा श्रुतं बहु प्रियं वृत्तम् ।
प्रिये निशम्यतामिदं वृत्तम् ।।१।।
वपु र्विनिद्ररोम ते भावि ।
विभाव्य चाधुनातनं वृत्तम् ।।२।।
विवाहपूर्वमद्य कन्याभिः ।
प्रियैः समं तिथीकृतं वृत्तम् ।।३।।
नृभिश्च सङ्गमानुकूलानाम् ।
प्रतिक्षणं परीक्षणं वृत्तम् ।।४।।
दिनैस्त्रिभिश्चतुर्भिरष्टाभिः ।
विवाहबन्धनक्षतं वृत्तम् ।।५।।
गृहेषु गह्वरेषु गोष्ठीषु ।
समस्ति सङ्गमक्षणं वृत्तम् ।।६।।
विदेशपद्धतिं दधानानाम् ।
नृणामुदारदर्शनं वृत्तम् ।।७।।
प्रियेण सङ्गमानुकूल्याय ।
पतिप्रताडनामयं वृत्तम् ।।८।।

भावार्थ - पहले बहुत प्रिय कथा (कहानी या घटना) सुनी। हे प्रिये यह कथा सुनो ।।१।।

आजकल की घटना सुनकर तेरा शरीर रोमाञ्चित हो जाएगा ।।२।।

अविवाहित लड़कियों द्वारा प्रेमियों के साथ निश्चित अवधि के लिए विवाह से पहले तिथि निर्धारित कर रहने की घटना (डेट पर जाना) ।।३।।

लोगों के द्वारा संगम के लायक नारियों की स्पर्धा में जाँच करने की घटना ।।४।। (सेक्सी के अनुसार स्तर निर्धारण)

तीन, चार या आठ दिनों में विवाह बन्धन के विच्छेद (तलाक) की घटना ।।५।।

घरों में, गुफाओं में, सभाओं में, यत्र तत्र संगम का अवसर मिल जाता है, यह घटना ।।६।।

विदेशी सभ्यता को अपनाने वाले लोगों का उदारवादी दृष्टिकोण की घटना ।।७।।

प्रेमी के साथ संगम की सुविधा के लिए पति की प्रताड़ना भरी घटना ।।८।।

ooooo

(४०)

*चिरात् समागतो निजं ग्रामम् ।*
*लभे न तं पुरातनं ग्रामम् ।।१।।*
*मिलिन्दवृन्दमब्जलीनं यत् ।*
*अबोधयद्रविश्च तं ग्रामम् ।।२।।*
*द्विजाः प्रभातसन्ध्ययासक्ताः ।*
*जलेऽभवंश्च यत्र तं ग्रामम् ।।३।।*
*सदावगुण्ठनं कुलस्त्रीणाम् ।*
*श्रियं व्यधाच्च यत्र तं ग्रामम् ।।४।।*
*निधाय कामिनीकुलं कुम्भान् ।*
*नयेत्सगीतमम्बु तं ग्रामम् ।।५।।*
*विलिप्तगोमयाजिरं यत्र ।*
*प्रतिगृहं भवेच्च तं ग्रामम् ।।६।।*
*सघण्टिकान् वृषान् पुरस्कृत्य ।*
*जनाः कृषिं व्रजन्ति तं ग्रामम् ।।७।।*
*वितर्त्तमानगोकुलं सायम् ।*
*रजोमयं करोति तं ग्रामम् ।।८।।*

**भावार्थ** - बहुत दिन बाद अपने गाँव आया। मैं उस पुराने गाँव को नहीं पा रहा हूँ ।।१।।

जहाँ कमल के कोश में लीन भ्रमर समूह को सूरज जगाया करता था, उस गाँव को (नहीं पा रहा हूं) ।।२।।

जहाँ द्विजगण प्रातःकालीन सन्ध्यावन्दन में लगे हुए जल में होते थे, उस गाँव को ।।३।।

जहाँ सदा कुलांगनाओं की घूँघट शोभा पाती थी, उस गाँव को।।४।।

जहाँ प्रमदा जन घड़ों को लेकर गीत गाती हुई जल ले जाती थी, उस गाँव को ।।५।।

जहाँ गाय के गोबर से लिपा हुआ आंगन प्रत्येक घर में होता था, उस

गाँव को ।।६।।

जहाँ घंटी बन्धे हुए बैलों को आगे कर लोग खेती को जाते हैं, उस गाँव को ।।७।।

जहाँ शाम को लौटता हुआ गाय समूह (पूरे गाँव को) धूलिमय कर देता है, उस गाँव को ।।८।।

ooooo

(४१)

*शोभमानं स्यादिदं ग्राम्यं गृहम् ।*
*सर्वसौविध्यं शुभं ग्राम्यं गृहम् ।।१।।*
*कारुकर्मख्यातमातनुतां मुदम् ।*
*पुत्रमित्रकलत्रकाम्यमिदं गृहम् ।।२।।*
*स्वीयमभिलाषं प्रियं चिरसञ्चितम् ।*
*पूर्णमातनुतामिदं ग्राम्यं गृहम् ।।३।।*
*देवगुरुविप्रप्रसादसमन्वितम् ।*
*धर्मधाम शमप्रदं ग्राम्यं गृहम् ।।४।।*
*आशिषा जननीजनकयोः सुन्दरम् ।*
*भूतिलसितं कामदं ग्राम्यं गृहम् ।।५।।*
*आतिथेयमनल्पविश्रामास्पदम् ।*
*उन्नतिं दिशदन्वहं ग्राम्यं गृहम् ।।६।।*
*कल्पतामखिलाशिवक्षतयेऽनिशम् ।*
*बान्धवैरनुशंसितं ग्राम्यं गृहम् ।।७।।*
*वास्तुविद्यावताऽऽशंसितमद्भुतम् ।*
*सर्वसौहार्दप्रदं ग्राम्यंगृहम् ।।८।।*

भावार्थ – यह ग्रामीण घर सुन्दर हो, इसमें सब सुविधा हो यह ग्रामीण घर शुभ हो ।।१।।

कारीगरी की कुशलता से उत्कृष्ट हो, पुत्र पौत्र तथा पत्नी आदि का मनोवाञ्छित यह ग्रामीण घर खुशी बढ़ावे ।।२।।

बहुत दिन से संजोयी हुई अपनी प्रिय अभिलाषा को यह ग्रामीण घर पूर्ण करे ।।३।।

देवता, गुरु, विप्र के आशीर्वाद से युक्त धर्म का आश्रय यह ग्रामीण घर शान्तिप्रद हो ।।४।।

माता और पिता के आशीर्वाद से यह ग्रामीण घर सुन्दर ऐश्वर्य से सुशोभित इच्छा को पूर्ण करने वाला हो।।५।।

अतिथियों के लिए अनुकूल अत्यन्त विश्राम का स्थान, अभ्युद प्रद यह ग्रामीण घर हो ।।६।।

सतत समस्त अशुभ निवारण के लिए यह ग्रामीण घर अनुकूल हो तथा बन्धु बान्धवों के द्वारा प्रशंसित हो।।७।।

वास्तुशास्त्र विशेषज्ञ के द्वारा अनुशंसित अद्भुत सब सौभाग्यदायक यह ग्रामीण घर हो ।।८।।

ooooo

(४२)

*ग्राम्यमनुस्मरणीयम् गीतम् ।*
*प्रावृषि कृषिकमनीयं गीतम् ।।१।।*
*शालिविरोपणकर्मणि कुशलैः ।*
*कृषीबलैर्गानीयम् गीतम् ।।२।।*
*क्षेत्रविलेखनकलाप्रवीणैः ।*
*हलवाहै रटनीयं गीतम् ।।३।।*
*हलकर्षणकृतखेदहरं यत् ।*
*वृषभाणां रमणीयं गीतम् ।।४।।*
*क्षेत्रमध्यरेखामधितिष्ठत् -*
*क्षेत्रपतेर्ध्यानीयं गीतम् ।।५।।*
*श्रावं श्रावं मनोरमं यत् ।*

*पथिकानां त्वरणीयं गीतम् ॥६॥*

*कृषिकर्मणि साफल्यमवाप्तुम् ।*

*वृष्टिदेवजपनीयं गीतम् ॥७॥*

*कृषिफलजीविजनानामेवम् ।*

*जीवनमनुकरणीयं गीतम् ॥८॥*

**भावार्थ** - ग्रामीण गीत स्मरण करें। वर्षा ऋतु में खेती के काम में वह गी मनोरम होता है ॥१॥

धान की रोपनी के काम में दक्ष किसान मज़दूरों के द्वारा गाने योग्य व गीत होता है ॥२॥

वह गीत खेत जोतने की कला में कुशल मज़दूर लोग गाते हुए हल चल हैं ॥३॥

बैलों के लिए वह गीत हल खींचने की थकान को दूर करने वाला मनो होता है ॥४॥

वह गीत खेत के मेर पर बैठे खेत के मालिकों का ध्यान खींचने वा होता है ॥५॥

सुन सुनकर मन को रमाने वाला जो वह गीत है, परदेशियों (प्रियत से दूर रहने वाले यात्रियों) को जल्दी-जल्दी (प्रियतमा के पास) जाने के लिए प्रे करने वाला है॥६॥

खेती में सफलता के साथ पूरी उपज पाने हेतु वह गीत वृष्टिदेव मनाने के लिए जपने योग्य या गाने योग्य माना जाता है ॥७॥

खेती की उपज पर जीवित रहने वाले किसानों का जीवन जैसे अनुकर करने योग्य होता, वैसा ही वह गीत भी अनुकरणीय या गाने योग्य है ॥८॥

ooooo

(४३)

*शिशुवदनं सस्मितं मनोज्ञम् ।*

*युवतिकुलं विस्मितं मनोज्ञम् ॥१॥*

*पवनप्रेरितमलसमन्दमिव ।*

व्रततिदलं कम्पितं मनोज्ञम् ।।२।।

विपिनमनल्पविधातिमधुस्वर-
खगकुलरवगुञ्जितं मनोज्ञम् ।।३।।

गिरिगहनं वनवासिरघुपतेः ।
चरणकमललङ्घितं मनोज्ञम् ।।४।।

सुरधुनिशोभितशम्भुशिरो ननु ।
शशिशकलालङ्कृतं मनोज्ञम् ।।५।।

श्रमशिथिलश्रमिकार्जितमपि यत् ।
किमपि ततः सञ्चितं मनोज्ञम् ।।६।।

मनुजदैन्यमभिशाप इतीदम् ।
जननायकचिन्तितं मनोज्ञम् ।।७।।

श्रुतिविहितं परहितं कर्म शुभ-
मिति मनसा स्वीकृतं मनोज्ञम् ।।८।।

विपणिरचितमाल्यं क्षुधितस्य न ।
कनकरत्नमण्डितं मनोज्ञम् ।।९।।

सुरयुवतीपरिवृतमपि सदनम्
न हि यतये कल्पितं मनोज्ञम् ।।१०।।

हलपद्धतिपतिताङ्कुरिवीजम् ।
कृषककुलालोकितं मनोज्ञम् ।।११।।

**भावार्थ** - मुस्कुराया हुआ बच्चे का चेहरा मनोरम होता है। प्रमदावर्ग चकित मनोहर है ।।१।।

हवा के द्वारा प्रेरित अलसाया मन्द जैसा लता-पल्लव कम्पित मनोहर होता है ।।२।।

बहुत प्रकार की मीठी आवाज़ वाले पक्षियों के कलरव से गुञ्जित वन मनोहर होता है ।।३।।

वनवास के समय श्री राम के पदकमल से मापा गया पर्वत गुफा मनोहर

होता है ।।४।।

गंगा से सुशोभित भगवान् शिव का मस्तक चन्द्रकला से अलंकृत होकर सुन्दर होता है ।।५।।

मिहनत से थका मजदूर जो कुछ कमाता है, उससे जो कुछ भी थोड़ा सा वह बचाकर जमा करता है वह अच्छा है।।६।।

"लोगों की गरीबी अभिशाप है" यह यदि नेताओं द्वारा चिन्ता का विषय हो, तो अच्छा है ।।७।।

दुकान में सजाई माला यदि सोना और रत्न से जड़ी हुई है भी तो वह भूखे को अच्छी नहीं लगती ।।९।।

अप्सराओं से घिरा हआ घर भी संन्यासी के लिए मनोहर नहीं हो पाता ।।१०।।

(खेत में) हल की दरार के बीच पड़ा हुआ बिचड़ा जब अंकुरित होकर किसानों द्वारा देखा जाता है, वह बहुत ही सुन्दर होता है ।।११।।

ooooo

(४४)

*नयामि भाविचिन्तया नक्तम् ।*
*गतं स्मराम्यनिद्रया नक्तम् ।।१।।*
*उपैति किं न मामलं स्वापः ।*
*इति प्रतर्कये धिया नक्तम् ।।२।।*
*उलूकचौरदस्युबाहुल्यम् ।*
*बहिर्न सञ्चरेद् भिया नक्तम् ।।३।।*
*कलासमग्र एष शुभ्रांशुः ।*
*न धौति सर्वदा श्रिया नक्तम् ।।४।।*
*दिनानि चन्द्रिका च चत्वारि ।*
*पुनस्ततं तमिस्रया नक्तम् ।।५।।*
*दिनं तु दुर्दिनं हि दीनस्य ।*
*नयत्यसौ बुभुक्षया नक्तम् ।।६।।*

*हसत्युपैति वीक्षते वक्रम् ।*
*वियापयेत्प्रिया ह्रिया नक्तम् ।।७।।*
*दिवा प्रतीक्षते प्रिया पान्थम् ।*
*नयत्यसौ पिपासया नक्तम् ।।८।।*
*रहः प्रियेण कामिनीक्रीड़ा ।*
*प्रलम्बते विना ह्रिया नक्तम् ।।९।।*
*प्रियोऽपि कोऽपि मानिनीं मुग्धाम् ।*
*प्रबोधयेत्सपर्यया नक्तम् ।।१०।।*

**भावार्थ** - भावी चिन्ता से रात बिताता हूँ। बीती बात को याद करता हूँ और नींद के बिना ही रात काटता हूँ।।१।।

मुझे क्यों नहीं पर्याप्त नींद आती, यह मैं बुद्धि से रात भर तर्क वितर्क करता हूँ ।।२।।

उल्लू, चोर डकैतों की बहुलता है, इसलिये डर से रात को बाहर नहीं घूमना चाहिए ।।३।।

समस्त कलाओं से पूर्ण भी चन्द्रमा हमेशा अपनी शोभा सम्पत्ति से रात को धवल नहीं करता ।।४।।

चार दिनों की चाँदनी होती, फिर तो अन्धकार से छन्न रात होती है ।।५।।

गरीब का दिन तो दुर्दिन होता ही है, वह रात (भी) भूख से बिताता है ।।६।।

हँसती है, समीप आती है, चेहरा देखती है, प्रियतमा रात (भी) लज्जा से बिता देती है ।।७।।

दिन में प्रियतमा परदेशी पथिक की प्रतीक्षा करती, वह रात भी प्यास से (प्रिय मिलन आशा से) गुजार देती है ।।८।।

रात को एकान्त में लज्जा के बिना प्रियतम के साथ नायिका की काम क्रीड़ा बड़ी लम्बी हो जाती है ।।९।।

कोई प्रियतम भी मुग्धा प्रमदा प्रियतमा को बड़े ही आदरभाव से मनावे ।।१०।।

ooooo

(४५)

*प्रभातधाम भानवं चित्रम् ।*
*विभाति चान्वहं नवं चित्रम् ।।१।।*
*तमो निपीय नैशमन्धं तत् ।*
*पुरोऽरुणं नभो नवं चित्रम् ।।२।।*
*निशाकपालिनीसरागास्यम् ।*
*तमो निपीय दानवं चित्रम् ।।३।।*
*निजानुरक्तवाससा प्राची ।*
*वृणोति वर्त्म भानवं चित्रम् ।।४।।*
*कलाधारः समीक्ष्य रक्ताभम् ।*
*रविं वगाहतेऽर्णवं चित्रम् ।।५।।*
*प्रियानुरागमद्वयं दिव्यम् ।*
*रविः प्रशास्ति मानवं चित्रम् ।।६।।*

**भावार्थ** - सूरज का प्रातःकालीन तेज सुन्दर या विचित्र होता है। प्रतिदिन व नया और विस्मयकारी होता है।।१।।

रात के काला अन्धकार का पान करके जो पूरब नया लाल आकाश व कर देता है वह विस्मयकारी है।।२।।

अन्धकार रूप विचित्र राक्षस का संहार कर रात रूप योगिनी का चेह लाल है ।।३।।

अपने रंगे हुए वस्त्र से पूरब दिशा सूरज के मार्ग को सजा रही ।।४।।

चन्द्रमा सूरज को लाल (क्रोध में) देखकर समुद्र में (डर से) डूब रह है, यह आश्चर्य है ।।५।।

अद्वितीय दिव्य प्रियतमा का प्रेम सूरज आदमी को सिखा रहा है। य आश्चर्य है ।।६।।

ooooo

(४६)

*काञ्चनाभं रम्यगात्रं मे प्रियम् ।*
*त्वदीयं मन्दस्मितं बाले प्रियम् ।।१।।*
*रूपमनवद्यं विशद्यं चाद्वयम् ।*
*कर्षति प्रसभं मनो जगते प्रियम् ।।२।।*
*त्वदीयं वत चकितहरिणीप्रेक्षणम् ।*
*योगिनामपि कुलं तन्मनुते प्रियम् ।।३।।*
*वीक्ष्य प्रत्यागतं मृदुकुसुमाकरम् ।*
*कुलं प्रमदानां पुना रमते प्रियम् ।।४।।*
*श्यामलं नक्तं निशानाथो यथा ।*
*म्लानमबलास्यं प्रियः कुरुते प्रियम् ।।५।।*
*प्रियानेत्राङ्कितं हालाभाजनम् ।*
*नायकः सहभोजनं स्वदते प्रियम् ।।६।।*
*ग्रामदेशे स्वश्रमेण कृषीबलः ।*
*मृत्तिकामपि काञ्चनं कुरुते प्रियम् ।।७।।*

**भावार्थ** - हे बाले ! तेरा स्वर्णिम सुन्दर शरीर मुझे प्रिय है, तेरी मन्द मुस्कान प्रिय है ।।१।।

अनिन्दनीय सुभग अद्वितीय तेरा रूप हठात् मन को खींच लेता है वह रूप संसार को प्रिय होता है ।।२।।

तेरा चौंकी हरिणी जैसा चञ्चल जो चितवन है, उसे योगियों का समूह भी प्रिय मानता है ।।३।।

लौटे हुए प्रिय वसन्त ऋतु को देखकर युवतियों का समूह फिर से प्रियतम में रम जाता है ।।४।।

जिस तरह अन्धेरी रात को चन्द्रमा मनोरम बना देता है, वैसे ही मलिन प्रियतमा के चेहरे को प्रियतम मनोहर बना देता है ।।५।।

प्रेमिका की आँख से प्रतिबिम्बित मदिरा के प्याले को नायक (तदनुकूल)

भोजन में बड़ी स्वाद पीता है ।।६।।

ग्रामीण क्षेत्र में किसान अपने परिश्रम से मिट्टी को भी प्रिय सोना बना देता है ।।७।।

ooooo

(४७)

प्रावृषाविलं प्रयाति रंहसा नदीजलम् ।
कामिनीमनो यथा स्मरार्दितं हि चञ्चलम् ।।१।।
कामिनां मनो वयोविवेकमद्य मुञ्चति ।
षट्पदो मधुव्रतोऽपि किं प्रयाति कुड्मलम् ।।२।।
वैभवावलिप्त एष भूरिभोगमश्नुते ।
पादपः फलान्वितः किमत्ति तन्निजं फलम् ।।३।।
हिंस्रजन्तुसङ्कुले वने वसन् मृगो मृदुः ।
सद्वचोभिरप्यसौ जनो जहाति किं मलम् ? ।।४।।
कोषसञ्चयं विधाय नायको विमुह्यति ।
दूयमानमद्य किं बिभर्त्यसौ कृषीबलम् ।।५।।
ग्राम्यजीवनेऽधुनापि दैन्यकल्मषग्रहः ।
नायको निमील्य चक्षुषी कृतं च वेत्त्यलम् ।।६।।
ग्रामवासिनां कुलं नवेऽपि विश्ववैभवे ।
व्योमवर्ति शस्यसम्पदे प्रतीक्षते जलम् ।।७।।
जातिधर्ममूलकेन भाषणेन सर्वतः ।
भेदमादधत्प्रजासु राजनीतिमद्वदलम् ।।८।।

**भावार्थ** – जैसे कामिनी का मन काम पीड़ित और चञ्चल होता है, उसी तरह बरसात के गंदा नदी का पानी तीव्र गति से भाग रहा है ।।१।।

कामुक लोगों का मन आजकल उमर का अन्तर भी छोड़ देता है। पराग का व्रती भ्रमर क्या कली के पास जाता? ।।२।।

धन के मद में चूर यह आदमी बहुत प्रकार का भोग विलास भोगता है,

किन्तु फलों से लदा हुआ पेड़ क्या स्वयं वह फल खाता है ? ।।३।।

भयानक जानवरों से भरे जंगल में निवास करता हुआ हरिण कोमल स्वभाव का होता है किन्तु क्या यह आदमी सदुपदेशों से भी अपना दोष छोड़ पाता है ? ।।४।।

अपने खज़ाने का संग्रह कर (भरकर) नायक (नेता) मुग्ध है। दुःखी होते हुए (क्षीण होते हुए) किसान को क्या वह भरण-पोषण कर पाता है ? ।।५।।

ग्रामीण जीवन में अभी भी गरीबी और गन्दगी का ग्रह व्याप्त है। नेता दोनों आँखें बन्द कर 'जो कर दिया' उसे काफी समझ लेता है।।६।।

ग्रामवासियों का वर्ग नवीन आर्थिक समृद्धि होने पर भी अपनी फसल की सम्पन्नता के लिए आकाशवर्ती जल की प्रतीक्षा करता है ।।७।।

राजनीतिक दल जाति और धर्म मूलक भाषण से सब ओर प्रजाओं में (जनता में) फूट डाल रहा है ।।८।।

ooooo

(४८)

*स्वातिविन्दुं जलदगलितं चातकोऽयम् ।*
*याचते भुवि नैव विततं चातकोऽयम् ।।१।।*
*स्वादुवारिविभूषितः सरितां प्रवाहः ।*
*वर्त्ततां न हि काङ्क्षते तं चातकोऽयम् ।।२।।*
*कोटिपतिरिव भातु भुवि रत्नाकरोऽपि ।*
*वीक्षते न सगर्व एतं चातकोऽयम् ।।३।।*
*कूपवापीपल्वलेषु यदम्बु मधुरम् ।*
*तदपि मनुतेऽपथ्यमहितं चातकोऽयम् ? ।।४।।*
*खगा बहुविटपा यथा विपिने वसन्तु ।*
*नाम धत्ते साधु विदितं चातकोऽयम् ।।५।।*
*प्राकृताः प्रकृता लसन्तु सरोवरास्ते ।*
*याचते निजभागविहितं चातकोऽयम् ।।६।।*
*स्वातिभे वर्षति कदाचिन्नैव मेघः ।*
*वर्त्ततां तृषितोऽपि सततं चातकोऽयम् ।।७।।*

**भावार्थ** - यह चातक (पक्षी) मेघ से गिरी स्वाती नक्षत्र की बूँद मांगता है। यह चातक जमीन पर फैले पानी को नहीं चाहता।।१।।

नदियों का प्रवाह स्वादिष्ट पानी से सुशोभित रहे, किन्तु उसे यह चातक नहीं चाहता ।।२।।

करोड़पति की तरह पृथ्वी पर समुद्र शोभित होवे, गर्व के साथ यह चातक इसे (समुद्र को) नहीं देखता।।३।।

कुँआ, तालाब तथा गड्ढों में जो मीठा पानी है उसे भी यह चातक अपथ्य तथा अहितकर मानता है ।।४।।

चिड़ियाँ अनेक वृक्षों वाला होते हुए भी जंगल में निवास करे। किन्तु सुन्दर और विख्यात नाम यह चातक ही धारण करता है ।।५।।

स्वाभाविक तथा कृत्रिम वे सरोवर सुशोभित होवें किन्तु यह चातक अपने हिस्से की मांग ही करता है ।।६।।

स्वाती नक्षत्र में कभी मेघ एकदम नहीं बरसता है, चाहे यह चातक सदा प्यासा ही क्यों न रहे ।।७।।

ooooo

(४६)

*विन्दुमात्रं स्वातिमेघं याचते ।*
*चातकस्तृषितोऽपि नाऽलं याचते ।।१।।*
*वर्त्तितां वारांनिधी रत्नाकरः ।*
*कः पिपासाशान्तये तं याचते ।।२।।*
*मोदमाना महान्तो विलसन्तु ते ।*
*जनोऽयं जीवनोपायं याचते ।।३।।*
*पद्मकोशे मधु स्वदमानोऽप्ययम् ।*
*षट्पदो भानुप्रकाशं याचते ? ।।४।।*
*ग्राम्यगीतस्यापि शब्दः शोभनः ।*
*कवेः सद्भावं सदर्थं याचते ।।५।।*

*दुर्भगा दीनापि माता दुर्बला ।*
*सस्मितं निजशिशोरास्यं याचते ॥६॥*
*अस्मदीयोद्यानमतिशीतार्दितम् ।*
*साम्प्रतं मलयाद्रिवातं याचते ॥७॥*

**भावार्थ** - चातक स्वाती नक्षत्र से बूँद मात्र मांगता है। प्यासा भी चातक अधिक कुछ नहीं मांगता ॥१॥

समुद्र भले जलों का खज़ाना रहे, प्यास बुझाने के लिए कौन उससे (समुद्र से) मांगता है ? ॥२॥

वे बड़े लोग मौज मस्ती मनाते हुए खुश होते रहें। यह आदमी (गरीब) केवल अपने जीने का सहारा मांगता है॥३॥

(रात को) कमल के कोश में पराग का आस्वादन करता हुआ भी यह भौंरा सूर्य की रौशनी चाहता है ॥४॥

ग्राम्य गीत का भी शब्द सुन्दर होता है, केवल कवि का सुन्दर भाव और सही अर्थ वह शब्द मांगता है अर्थात् ग्राम्य गीत का सुन्दर शब्द भी जब अच्छे कवि के सुन्दर भाव और अर्थ से समन्वित होता है तो सुन्दर कविता बन जाता है ॥५॥

अभागिन गरीब दुबली माँ भी मुस्कुराता अपने बच्चे का चेहरा मांगती है ॥६॥

हमारा बगीचा अत्यन्त ठंढ से मुर्झा गया है। इस समय वह मलय पर्वत की हवा मांगता है ॥७॥

ooooo

(५०)

*स्मितं त्वदीयमुत्सवं मन्ये ।*
*मितं वचोऽपि गौरवं मन्ये ॥१॥*
*पुरो मुदा मरालिकागत्याः ।*
*अपाङ्गवीक्षितं शिवं मन्यं ॥२॥*
*प्रिये ! तवाधरामृतस्वादम् ।*
*समस्तजन्मवैभवं मन्ये ॥३॥*

प्रिये कृतागसि प्रमुग्धायाः ।
हठं क्रुधाऽपि मार्दवं मन्ये ।।४।।
मदस्खलं मुहुर्मुहुर्मानम् ।
तव स्वभावशैशवं मन्ये ।।५।।
तवालकै र्निलीनमास्यं तद् ।
घनावृताब्जबान्धवं मन्ये ।।६।।
करद्वयं च कोमलं हृद्यम् ।
वसन्तकम्रपल्लवं मन्ये ।।७।।
त्वदीयनेत्रविम्बितं पात्रम् ।
मनोरमं कृतासवं मन्ये ।।८।।
त्वदीयपादलब्धसारूप्यम् ।
प्रियेऽब्जमुच्चवैभवं मन्ये ।।९।।
समीक्ष्य धातृकौशलं दिव्यम् ।
वपुः कलोच्चयोद्भवं मन्ये ।।१०।।
त्वदीयरूपसम्पदाख्याने ।
प्रिये ! स्वशब्दलाघवं मन्ये ।।११।।

**भावार्थ** - तेरी मुस्कान मैं त्योहार मानता हूँ। तेरा अल्प वचन भी मैं (अपना) गौरव मानता हूँ ।।१।।

सामने खुशी से हंसी की गतिवाली प्रियतमा का कटाक्ष मैं शुभ मानता हूँ ।।२।।

हे प्रिये ! तेरे अधर सुधा की स्वाद को मैं पूरे जीवन की सम्पत्ति मानता हूँ ।।३।।

अपराधी प्रियतम के ऊपर मुग्धा नायिका का क्रोध से किया हुआ हठ भी मैं कोमलता मानता हूँ ।।४।।

मदस्खलन (बाचतीत में भटकना) बार-बार रूठना तेरे स्वभाव की बचपना मानता हूँ ।।५।।

तेरे खुले बालों से ढका हुआ वह चेहरा बादल से ढका चन्द्रमा मानता हूँ ।।६।।

दोनों हाथ कोमल और मनोहर हैं, जिन्हें मैं वसन्त ऋतु का कोमल किसलय मानता हूँ ।।७।।

तेरी आँख से प्रतिविम्बित प्याला मैं मनोहर मदिरापान मानता हूँ।।८।।

हे प्रिये ! तेरे पैर की समता प्राप्त कर कमल को समुन्नत शोभा सम्पत्ति वाला मानता हूँ ।।९।।

विधाता के दिव्य निर्माण कौशल की समीक्षा कर मैं तेरे शरीर को निर्माण कला का उत्कर्ष मानता हूँ ।।१०।।

हे प्रिये ! तेरी सौन्दर्य-सम्पत्ति के वर्णन में मैं अपने शब्द की न्यूनता मानता हूँ ।।११।।

ooooo

(५१)

*स्वागतं तनुते प्रियस्य रवेरियं प्राची ।*
*प्रभाते लभते मुदाऽरुणितश्रियं प्राची ।।२।।*
*प्रोषिते दयिते विरहिणी सुप्रियेव ।*
*नैशतमसावृता धत्ते न श्रियं प्राची ।।३।।*
*दिग्भ्रमाकुलिताय विजने वनोद्देशे ।*
*प्रायशो विदधाति सम्यग् दिग्धियं प्राची ।।४।।*
*विश्वजनकल्याणकृतसौम्या पुराणी ।*
*संस्कृति बहुविश्रुता भवतादियं प्राची ।।५।।*
*पद्धतिं वैदेशिकीमनुकुर्वते ये ।*
*रीतिरेभ्यो रोचतां साक्षादियं प्राची ।।६।।*
*पूर्वमुदयं भानुमानिह याति नित्यम् ।*
*सर्वजनवन्द्या प्रिया तस्मादियं प्राची ।।७।।*
*शोभते प्रियमण्डना सिन्दूररम्या ।*
*सुप्रियेव प्रभाते तस्मादियं प्राची ।।८।।*

**भावार्थ** - यह पूरब दिशा अपने प्रियतम सूरज का स्वागत कर रही है। अतएव प्रातःकाल खुशी से लालशोभा को धारण करती है।।१।।

यहीं अपने इस दुराचार का फल भोग लेता है ।।४।।

वृक्ष फल देते हैं तथा जमीन फसल देती है फिर यह आदमी मांसादि खाता है ।।५।।

एक ही शिखर पर पहुँचे हुए ये दोनों पक्षी हैं। इनमें से एक केवल देखता है और दूसरा अर्थरूप पीपल खाता है ।।६।।

यह आदमी जो इस समय भी सही रास्ते चलता है वह बिना सब्जी का ही रोटी खा पाता है ।।७।।

कभी आदमी अन्न खाता है और मस्त रहता है, कभी अन्न ही उसे स्वयं खाता है ।।८।।

ooooo

(७६)

*तव स्मृतिर्मदीयमानसं तुदत्यहर्निशम् ।*
*न वेद्मि किं ततोऽपि जीवितुं नुदत्यहर्निशम् ।।१।।*
*प्रयोजनं न दृश्यते पुरो ममाधुना सखे ।*
*मनो मुधा तथापि सर्वतो भ्रमत्यहर्निशम् ।।२।।*
*समग्रजीवने कृतं नवं नवं प्रकल्पनम् ।*
*विसर्जितं पुनः कृतं क्रमश्चलत्यहर्निशम् ।।३।।*
*त्वदीयनाम साम कामदामपिञ्जरीकृते ।*
*मदीयमानसे चलेऽसिते भवत्यहर्निशम् ।।४।।*
*प्रवर्त्तते निवर्त्तते पुनः प्रवर्त्तते जनः ।*
*प्रवृत्तितश्च्युतोऽपि कोऽपि किं जयत्यहर्निशम् ।।५।।*
*उदेति चास्तमेति भानुरेष सूचयन्निति ।*
*क्रमोऽयमेव जन्तुजीवने व्रजत्यहर्निशम् ।।६।।*
*दिवा रविः प्रकाशते निशं निशाकरः क्वचित् ।*
*प्रदीपमालिकाप्रकाशितं लसत्यहर्निशम् ।।७।।*
*इदं हि जन्तुजीवनं प्रभोः कृपावलम्बितम् ।*
*अतो विहाय दुष्कृतं बुधो जपत्यहर्निशम् ।।८।।*

भावार्थ - तेरी याद मेरे मन को दिन-रात परेशान करती है। फिर भी न जाने क्यों जीने के लिए दिन-रात प्रेरित करती है ।।१।।

हे मित्र ! इस समय मेरे सामने कोई प्रयोजन नहीं दिखता। फिर भी बेकार मेरा मन सब ओर दिन-रात भटकता फिरता है।।२।।

जीवन भर नई-नई कल्पना करता रहा। कभी छोड़ दी फिर कल्पना की, यह क्रम दिन-रात चलता रहता है।।३।।

कामरूपी डोरी से जकड़े हुए चंचल मलिन मेरे मन में दिन-रात तेरा नाम ही सान्त्वना देता है ।।४।।

दिन-रात आदमी प्रवृत्त होता है, फिर रुक जाता है, फिर प्रवृत्त है, जो कोई प्रयास से वंचित हो जाता है, क्या वह जीत पाता ? ।।५।।

यह सूरज उगता है, अस्त होता है, यह सूचित करता हुआ कि प्राणी के जीवन में भी यह क्रम दिन-रात चलता रहे।।६।।

सूरज दिन को प्रकाशित करता है चन्द्रमा कहीं रात को। प्रदीप माला के द्वारा प्रकाशित दिन-रात शोभित होता है ।।७।।

यह प्राणी का जीवन भगवान् की कृपा पर निर्भर है । इसलिए दुष्कर्म को छोड़कर ज्ञानी जन दिन-रात प्रभु का नाम जपते हैं ।।८।।

ooooo

(७७)

*रविरञ्जनमिव सान्ध्यं तेजः ।*
*जपाकुसुममिव सान्ध्यं तेजः ।।१।।*
*खलकृत्याहतकुपितकालिका-*
*जिह्वातलमिव सान्ध्यं तेजः ।।२।।*
*बहुरावणकृतदुष्कृतिभावित-*
*मारुतिमुखमिव सान्ध्यं तेजः ।।३।।*
*रजनीरमणीकृतशृङ्गार-*
*सुभगचिह्नमिव सान्ध्यं तेजः ।।४।।*
*रविपथबाधकदानवदारण-*

*सृतशोणितमिव सान्ध्यं तेजः ।।५।।*

*सुरकृतसान्ध्यसपर्यार्पितबहु-*

*रक्तपुष्पमिव सान्ध्यं तेजः ।।६।।*

*निशानायिका स्वागत सज्जित-*

*रक्ताम्बरमिव सान्ध्यं तेजः ।।७।।*

*गङ्गाम्भसि लम्बितमिदमद्भुत-*

*नीराजनमिव सान्ध्यं तेजः ।।८।।*

*कामरवहनसमुधत सुरगण-*

*वसनविम्बमिव सान्ध्यं तेजः ।।९।।*

**भावार्थ** - सूरज को अनुरंजित करने जैसा यह सन्ध्याकालिक प्रकाश है। ओढुल फूल की भाँति यह सन्ध्या कालिक प्रकाश है।।१।।

दुर्जन के दुष्कर्म से आहत क्रुद्ध कालिका के जिह्वा-तल की भाँति यह सन्ध्याकालिक प्रकाश है ।।२।।

(आजकल) अनेक रावण के दुष्कर्म से प्रभावित हनुमान् जी के मुख की भाँति यह सन्ध्याकालिक प्रकाश है।।३।।

रात रूपी नायिका के द्वारा किए गये शृंगार के सौभाग्य का चिह्न यह सान्ध्य प्रकाश है ।।४।।

सूर्य के मार्ग को रोकने वाले दानव की हत्या से बहते खून की भाँति यह सन्ध्याकालिक लाल प्रकाश है।।५।।

देवताओं द्वारा की गई सन्ध्याकालिक पूजा में दिए गए बहुत फूल की भाँति यह सन्ध्याकालिक प्रकाश है।।६।।

रात रूपी नायिका के स्वागत में सजाए गये लाल वस्त्र की भाँति यह सन्ध्याकालिक प्रकाश है ।।७।।

गंगा के जल में प्रतिबिम्बित यह विस्मयकारी आरती की भाँति सन्ध्याकालिक लाल प्रकाश है ।।८।।

कामर ढोने के लिए तैयार देवता गण के वस्त्र के प्रतिबिम्ब की भाँति यह सन्ध्याकालिक प्रकाश है ।।९।।

ooooo

(७८)

राजति सुकृतविपाको नित्यम् ।
फलति वचसि मधुपाको नित्यम् ॥१॥
चिररोगाक्रान्तं गुरुजनमपि ।
मनसो शुश्रूषति को नित्यम् ॥२॥
जठरानलशमनाय श्रमिकः ।
श्रममाचरति वराको नित्यम् ॥३॥
दुराचरणमतिदुःखदमित्यपि ।
अघमाश्रयते लोको नित्यम् ॥४॥
कूजति कोकिलकुलमतिकलमुत ।
रौति दुःश्रवं काको नित्यम् ॥५॥
लभतां क्षणिकोन्नतिं कदाचि- ।
न्न च मिथ्याजल्पाको नित्यम् ॥६॥
क्रूरं दुश्चरितं विप्रं ननु ।
अतिवर्त्तते श्वपाको नित्यम् ॥७॥
अलङ्कारगुणसहितेऽदोषे ।
काव्ये रसपरिपाको नित्यम् ॥८॥

भावार्थ – पुण्यकर्म का परिणाम हमेशा शोभता है। वाणी में मिठास सदा सफल होता है ॥१॥

सदा रोगग्रसित गुरुजन को भी मन से कौन हमेशा सेवा करना चाहता है ? ॥२॥

पेट की आग को शान्त करने के लिए बेचारा मज़दूर हमेशा मेहनत करता है ॥३॥

दुराचार अतिशय दुःखदायक होता है। फिर भी आदमी पाप का आश्रय लेता है ॥४॥

इधर कोयल समूह मीठी आवाज़ करता है, उधर कौआ कर्कश आवाज़

हमेशा करता है ।।५।।

झूठ बोलने वाला कभी क्षणिक उन्नति (भले ही) पा ले, किन्तु हमेशा नहीं ।।६।।

क्रूर दुराचारी विप्र से बढ़कर निश्चय ही सदा चाण्डाल होता है ।।७।।

अलंकार और गुण से युक्त दोषरहित काव्य में हमेशा रस परिपाक होता है।।८।।

ooooo

(७६)

पुरातनं पुरस्कृतं विभाति भारतम् ।
सुविश्रुतार्यसंस्कृतिं दधाति भारतम् ।।१।।
उदारभावनाभरेण सर्वमीक्षते ।
शुभातिथेयमद्भुतं चकास्ति भारतम् ।।२।।
विरोधिदेशबाधितं सुशासितं बुधैः ।
शनैर्विकासवर्त्मनि प्रयाति भारतम् ।।३।।
गिरिप्रपातगुञ्जितं वनश्रियान्वितम् ।
प्रसिद्धजाह्नवी नदी पुनाति भारतम् ।।४।।
हिमालयोऽतितुङ्गशृङ्गपर्वतो महान् ।
प्रचण्डशत्रुतः सदैव पाति भारतम् ।।५।।
सदार्षधर्मनिर्भरं दयार्द्रविस्तरम् ।
विरोधिनेऽपि संश्रयं ददाति भारतम् ।।६।।
विभिन्नदेशमध्यशान्तिसख्यसौख्यदम् ।
नयं समग्रसम्मतं हि लाति भारतम् ।।७।।
विनाशहेतुमाणवीयमस्त्रसाधनम् ।
विकासरोधि बाधकं जहाति भारतम् ।।८।।
घृणास्पदं विनाशकारिणीं पराश्रिताम्
श्वपाककपाठपद्धतिं भृणाति भारतम् ।।९।।

भावार्थ - प्राचीन अग्रसर भारत देश शोभित होता है। सुविख्यात आर्य स[म्]
को भारत धारण करता है ।।१।।

पूरी उदार भावना से यह सब को देखता है। सुन्दर अतिथि सत्कार से युक्त भारत अद्भुत चमकता है ।।२।।

शत्रु देश से बाधित होते हुए भी कुशल राजनीतिक पण्डितों से शासित भारत धीरे-धीरे विकास के मार्ग पर अग्रसर है ।।३।।

पर्वत के निर्झर से गुंजायमान जंगलों की शोभा से युक्त भारत को सुप्रसिद्ध गंगा नदी पवित्र करती है ।।४।।

ऊँचे शिखर वाला महान् हिमालय पर्वत प्रचण्ड शत्रु से हमेशा रक्षा करता है ।।५।।

सदा आर्ष धर्म पर निर्भर रहने वाला दया से भरपूर उदार भारत शत्रु को भी आश्रय प्रदान करता है ।।६।।

अनेक प्रकार के देशों के बीच शान्ति, मित्रता तथा सुगमता प्रदान करने वाला भारत सर्वसम्मत नीति लाता है ।।७।।

विनाश के कारण, विकास को रोकने वाले बाधक परमाणु अस्त्र के साधन को भारत त्याग कर देता है।।८।।

घृणा के मूल (नफ़रत की जड़) विनाश के कारण दूसरे पर आश्रित क्रूरजनों की शिक्षा पद्धति को भारत तिरस्कृत करता है।।९।।

ooooo

(८०)

*पयोदपातितं नवं वारि ।*
*धरामुपेत्य चाविलं वारि ।।१।।*
*समेत्यजाह्नवीं ततः सद्यो ।*
*भवेत्तदेव जाह्नवं वारि ।।२।।*
*मुखे निपत्य चातकस्येदं ।*
*समावधि प्रतुष्टिदं वारि ।।३।।*
*प्रणालिकामुखेन सङ्गम्य ।*
*नदीं प्रयाति चार्णवं वारि ।।४।।*
*सरिद्वरागतं हि तत्स्वादु ।*

*भवेदपेयमार्णवं वारि ।।५।।*

*सकल्मषे च पल्वले हेयम् ।*

*सरःसु तद्धि पावनं वारि ।।६।।*

*सितं तदीयवर्णमत्यन्तम् ।*

*मिलेच्च येन तत्समं वारि ।।७।।*

*यदा कदा च यत्र कुत्रापि ।*

*तदस्ति जन्तुजीवनं वारि ।।८।।*

*नदी सरः प्रणालिका वापी ।*

*समग्रमस्ति वारुणं वारि ।।९।।*

**भावार्थ -** मेघ से गिराया गया नया जल पृथ्वी को पाकर (पंक मिश्रित होने से) गंदा पानी हो जाता है ।।१।।

वहाँ से साक्षात् गंगा से मिलने पर वही पानी गंगाजल बन जाता है ।।२।।

वह जल चातक के मुख में गिर कर वर्ष भर सन्तुष्ट करने वाला होता जाता है ।।३।।

नाली के द्वारा नदी से मिलकर वह जल समुद्र को प्राप्त करता है ।।४।।

महानदी में पहुँच कर वही जल स्वादिष्ट हो जाता है । (किन्तु) समुद्र में वह पीने योग्य नहीं रहता ।।५।।

वह जल गंदे गड्ढे में त्याज्य रहता है किन्तु सरोवरों में वही पवित्र बन जाता है ।।६।।

उस जल का रंग अत्यन्त उजला है, वह जिससे मिलता उसके समान बन जाता है ।।७।।

यदा कदा जहाँ कहीं वह जल प्राणी का जीवन होता है।।८।।

नदी, सरोवर, नाली या तालाब सब जल वरुण देवता से सम्बद्ध है ।।९।।

ooooo

(८१)

*विश्रुताऽखिलमातृमाता मेदिनी ।*
*सर्वबीजप्रकृतिभूता मेदिनी ।।१।।*
*भुक्तये ननु कल्पताममरावती ।*
*कर्मणामाधारभूता मेदिनी ।।२।।*
*अब्धिवसनारत्नगर्भाशोभना ।*
*शैलकुचमण्डलाख्याता मेदिनी ।।३।।*
*काननालकभूषिता हरिभामिनी ।*
*अङ्कखेलदशेषसरिता मेदिनी ।।४।।*
*दैत्यकुलमातङ्कमानैषीदहो ।*
*तन्निहन्तुं जनितसीता मेदिनी ।।५।।*
*नागरोद्योगान्विता बहुविस्तृता ।*
*हर्म्यमण्डपकुटीयुक्ता मेदिनी ।।६।।*
*विष्णुनाऽऽहितशूकराकृतिनामुना ।*
*दन्तशिखराकृष्टनीता मेदिनी ।।७।।*
*अन्नफलभेषजाद्यै र्बहुभिःकिल ।*
*पालिताखिलजीवजनता मेदिनी ।।८।।*
*वन्यपादपलतासन्तानैः शुभा ।*
*विकासव्याजेन विहता मेदिनी ।।९।।*

**वार्थ** – विख्यात, समस्त माताओं की माता धरती है। समस्त बीजों की प्रकृति प धरती है ।।१।।

भोग के लिए (भले ही) स्वर्ग हो, किन्तु कर्मों का आधार धरती है ।।२।।

समुद्र का वस्त्र धारण करने वाली, रत्नों से भरे गर्भयुक्त सुन्दर पर्वत प स्तन से शोभित विख्यात धरती है ।।३।।

वन रूप केशों से अलंकृत विष्णु प्रिया यह धरती है। इसकी गोद में मस्त नदियाँ खेलती हैं ।।४।।

दानव समूह ने यहाँ आतंक फैला दिया तो उसे मारने हेतु इस धरती सीता को पैदा किया ।।५।।

शहर के उद्योगों से युक्त, अत्यन्त फैली महल, मण्डप तथा कुटियों वाली यह धरती है ।।६।।

शूकररूप धारण किए हुए इस विष्णु के द्वारा अपने दाँत के अग्रभाग से खींचकर लायी गई यह धरती है।।७।।

बहुत अन्न फल औषधि वनस्पति आदि से समस्त जीव तथा मानव समूह का पालन करने वाली यह धरती है ।।८।।

जंगली वृक्ष लता आदि की शृंखलाओं से सुशोभित यह धरती विकास के बहाने बिगड़ती जा रही है ।।६।।

ooooo

(८२)

*सुखयति शिशुमत्यधिका निद्रा ।*
*रहयति जरान्वितं सा निद्रा ।।१।।*
*क्षीराब्धावहिमध्यासीनम् ।*
*हरिमभिमवति हि माया निद्रा ।।२।।*
*दिवा स्वकर्मरतैरपि नक्तम् ।*
*सकलजनैरभिलषिता निद्रा ।।३।।*
*कुम्भकरणदनुजानुगामिनी ।*
*न रोचते गभीरा निद्रा ।।४।।*
*जनहितकर्म विधातुमिदानीम् ।*
*शासकजनैर्गृहीता निद्रा ।।५।।*
*श्रमशिशिलाङ्गश्रमिकाणामिह ।*
*दुश्शयनाप्यति सुखदा निद्रा ।।६।।*
*सर्वभूतसंस्थिता प्रसिद्धा ।*
*भवति भगवती दुर्गा निद्रा ।।७।।*
*स्वप्नलोकसञ्चारक्षणदा ।*
*दुःखदापि वा सुखदा निद्रा ।।८।।*
*सकलसुचिरविश्रामदायिनी ।*
*अनपायिनी अमेया निद्रा ।।६।।*

**भावार्थ** – अत्यधिक नींद बच्चे को आनन्द देती है। (किन्तु) वही नींद बूढ़े को छोड़ देती है ।।१।।

क्षीर सागर में शेष नाग पर बैठे भगवान् को माया निद्रा अभिभूत कर देती है ।।२।।

दिन में अपने काम में लगे सकल जन के द्वारा रात को नींद की चाह होती है ।।३।।

कुम्भकरण दानव का अनुगमन करने वाली गहरी नींद अच्छी नहीं लगती ।।४।।

इस समय लोक कल्याण के काम को करने के लिए शासक नेता लोगों ने नींद धारण कर ली है ।।५।।

मिहनत से ढीले अंगों वाले मज़दूरों को यहाँ खराब बिछावन पर ही बहुत आरामदायक नींद होती है ।।६।।

सब प्राणियों में रहने वाली प्रसिद्ध भगवती दुर्गा निद्रा कहलाती है ।।७।।

स्वप्नलोक में विचरण करने का अवसर प्रदान करनेवाली दुःखदायिनी या सुखदायिनी निद्रा होती है।।८।।

सबों को चिरविश्राम देने वाली कभी नहीं खुलने वाली निद्रा (मृत्युरूपी) अज्ञेय है ।।९।।

ooooo

(८३)

*कज्जलेनाविलं शोभनं लोचनम् ।*
*रक्तिमाभं भयत्रासदं लोचनम् ।।१।।*
*पश्यतीदं कदाचित्सखे दर्शयेत् ।*
*पीयते चातिहृद्यं मुखं लोचनम् ।।२।।*
*दुर्जनातङ्कमालोक्य साधुष्वहो ।*
*जायते वारिणाप्लावितं लोचनम् ।।३।।*
*दुष्कृतिं केनचित्संविधाय स्वयम् ।*
*लोकलज्जावशाच्चोरितं लोचनम् ।।४।।*
*सन्निरीक्ष्यापरस्य प्रकामोन्नतिम् ।*

*दीयते केनचित्कुत्सितं लोचनम् ॥५॥*

*विस्मयाविष्टसारङ्गनेत्रानुगम् ।*

*काव्यभाषासु पद्मोपमं लोचनम् ॥६॥*

*सानुरागं मदालस्ययुक्तं नतम् ।*

*शोभते ते प्रिये ! मादिरं लोचनम् ॥७॥*

*वह्निविक्षेपदक्षं मनोजान्तकम् ।*

*भालवर्ति श्रुतं शाम्भवं लोचनम् ॥८॥*

*ज्ञानविज्ञान सम्पादनाय क्षमम् ।*

*इन्द्रियाणां प्रसिद्धं परं लोचनम् ॥९॥*

*विश्वरूपं निजं दर्शयन्नच्युतः ।*

*दत्तवानर्जुनायाद्भुतं लोचनम् ॥१०॥*

**भावार्थ** – काज़ल से मलिन आँख सुन्दर होती है। लाल आँख भयानक होती है ॥१॥

यह आँख कभी देखती तथा कभी दिखाती है । मनोहर चेहरे को यह पीती (भी) है ॥२॥

दुर्जनों के आतंक को देखकर सज्जनों में जल से (अश्रु से) भर जाती है । अर्थात् दुःख के कारण सज्जनों की आँखें अश्रु से डबडबा जाती है ॥३॥

किसी के द्वारा दुराचार कर लेने पर स्वयं लोक लाज के कारण आँख चुराई जाती है ॥४॥

दूसरे की अतिशय उन्नति को देखकर किसी के द्वारा बुरी नज़र लाई जाती है ॥५॥

विस्मय से भरी मृग के नेत्र का अनुकरण करने वाली आँख काव्य की भाषाओं में कमल के समान कहलाती है ॥६॥

हे प्रिये ! प्रेम से भरी मद और आलस्य युक्त झुकी हुई तेरी मदिर आँख शोभती है ॥७॥

आग छोड़ने वाली कामदेव को भस्म करने वाली ललाट पर विराजमान शम्भु की आँख विख्यात है ॥८॥

ज्ञान-विज्ञान को सम्पादित करने में कुशल समस्त इन्द्रियों में सर्वोत्कृष्ट प्रसिद्ध आँख होती है ।।९।।

अपना विराट रूप दिखाते हुए भगवान् ने अर्जुन को अद्भुत (दिव्य) आँख दी थी ।।१०।।

ooooo

(८४)

*किमु मानसमभिलषति मरालः ।*
*कलरवमपि न हि नदति मरालः ।।१।।*
*जनपदजलमपि मलरहितं स्यात् ।*
*इत्यपि नहि चिन्तयति मरालः ।।२।।*
*किमिह पयोजलमिश्रं किं न च ।*
*भेदमिमं विस्मरति मरालः ।।३।।*
*विसकिसलयदलमपि पाथेयम् ।*
*वत सरभसमुत्सृजति मरालः ।।४।।*
*नगसरिताजलमनाविलं यत् ।*
*तदपि कलुषमनुभवति मरालः ।।५।।*
*वाणीवाहनतया सुविदितम् ।*
*सुमतिसाधनं नुदति मरालः ।।६।।*
*प्रेमिविरहवृत्तं दूरादपि ।*
*सफलतया संवहति मरालः ।।७।।*
*अविकलसुखदनिसर्गं रक्षतु ।*
*इति सकलं सूचयति मरालः ।।८।।*
*शोभनवपुरथवास्तु कुरूपम् ।*
*यत्तत्सहसा त्यजति मरालः ।।९।।*

**भावार्थ** - हंस क्यों मानसरोवर को चाहता है। कलरव (मीठी आवाज़) भी यह हंस नहीं करता ।।१।।

जनपद का पानी भी निर्मल होगा, यह भी हंस नहीं सोचता ।।२।।

यहाँ कौन सा जल दूधमिश्रित है, कौन नहीं है, हंस इस भेद को भी भूल

जाता है ।।३।।

मृणाल तथा कोमल पत्ते का पाथेय भी शीघ्रता के कारण हंस छोड़ रहा है।।४।।

पर्वती नदी का जल जो निर्मल है, उसे भी हंस गंदा समझता है ।।५।।

सरस्वती के वाहन होने के कारण सुविख्यात सुबुद्धि के साधन को प्रेरित करता है ।।६।।

प्रेमी-प्रेमिका की विरह-गाथा को दूर से भी यह हंस सफलतापूर्वक ढोता है।।७।।

समग्रतया सुखदायक प्रकृति की रक्षा करें यह बात हंस सबको सूचित कर रहा है ।।८।।

सुन्दर शरीर वाला हो अथवा कुरूप हो, जो कुछ भी हो एकाएक हंस (प्राणपखेरू) छोड़ देता है ।।९।।

ooooo

(८५)

*प्रकृतिसुभगमनघं शिशुवदनम् ।*
*सकलसुखदमतुलं शिशुवदनम् ।।१।।*
*स्मितविकसितमथ रोदनविकलम् ।*
*जननीरसजननं शिशुवदनम् ।।२।।*
*अलकाचितमम्बुदपरिवृतमिव ।*
*विधुविम्बं कम्रं शिशुवदनम् ।।३।।*
*अश्रुविमिश्रितलालाक्लिन्नम् ।*
*मातुरुपस्नवनं शिशुवदनम् ।।४।।*
*अस्फुटवचनं सहजसुहसनम् ।*
*बहुलानन्दकरं शिशुवदनम् ।।५।।*
*विकसितचलनयनं किलकिलमृदु ।*
*कर्षति कं न जनं शिशुवदनम् ।।६।।*
*कृतवामाङ्गुलि ललितकपोलम् ।*
*हसितमदनदर्पं शिशुवदनम् ।।७।।*

भावार्थ - स्वभाव से सुन्दर निष्कलुष बच्चे का मुख होता है। सबों को सुख देने वाला अनुपम शिशु का मुख होता है ।।१।।

मुस्कान से विकसित अथवा रोने से विकृत बच्चे का मुख माँ के वात्सल्य को पैदा करने वाला होता है।।२।।

खुले बाल से व्याप्त मेघ से ढके चन्द्र की भाँति मनोहर बच्चे का चेहरा लगता है ।।३।।

आँसू से मिले हुए लार से भिगा हुआ बच्चे का चेहरा माँ के दूध को लाने वाला (पन्हानें वाला) होता है।।४।।

अस्पष्ट (तोतली) आवाज़, सहज ढंग से सुन्दर हँसना, इनसे युक्त शिशु का चेहरा अत्यन्त आनन्ददायक होता है ।।५।।

विकसित चंचल आँखों वाला किलकिलाहट से सुकोमल (सुमधुर) शिशु का मुख किसे नहीं आकर्षित करता ?।।६।।

बाँए हाथ की अंगुलि डाले हुए सुन्दर सुकोमल कपोल वाला शिशु का मुख कामदेव के सौन्दर्य के अहंकार को भी हँस रहा है ।।७।।

ooooo

(८६)

*यामुने कूलदेशे स्थिता देहली ।*
*हर्म्यावलीदीपिता देहली ।।१।।*
*यानमानं प्रवक्तुं न शक्यं सखे ।*
*राजमार्गेष्वपि स्तम्भिता देहली ।।२।।*
*नागरं रेलयानं सुसौविध्यदम् ।*
*साधु तेनापि नो मापिता देहली ।।३।।*
*सर्वभागेभ्य आयान्ति लोका इह ।*
*अन्वहं तैरियं वर्धिता देहली ।।४।।*
*भारते हस्तिनापूरनाम्ना स्मृता ।*
*साम्प्रतं भारतस्यास्मिता देहली ।।५।।*
*विश्रुता नेहरूगान्धिका सर्वतो ।*
*राजमानेन्दिराशोभिता देहली ।।६।।*

*धर्ममार्गे धुरीणा सती साम्प्रतम् ।*
*अर्थसामर्थ्यसिद्धौ स्तुता देहली ।।७।।*
*विश्वबन्धुत्वसन्देशमालम्ब्य सा ।*
*विश्वमञ्चेऽतिसम्मानिता देहली ।।८।।*
*पार्श्वदेशोऽभ्यसूयापरो यो परः ।*
*तत्कृतेऽपि प्रशंसान्विता देहली ।।६।।*

**भावार्थ** – यमुना के किनारे दिल्ली स्थित है । ऊँची अट्टालिकाओं की पंक्तियों से यह दिल्ली प्रकाशित है ।।१।।

हे मित्र ! वाहनों की गिनती यहाँ कही नहीं जा सकती। राजमार्गों पर (वाहनों के कारण) दिल्ली रुक सी जाती है ।।२।।

मेट्रो रेल अत्यन्त सुविधाप्रद है। किन्तु उससे भी ठीक तरह से पूरी दिल्ली नहीं मापी जा सकी है। अर्थात् पूरी दिल्ली में अभी मेट्रो रेल की सुविधा नहीं हो पाई है।।३।।

यहाँ सब भाग से लोग आते हैं, उनसे दिनानुदिन यह दिल्ली बढ़ गई है ।।४।।

महाभारत में यह हस्तिनापुर के नाम से वर्णित है। इस समय यह दिल्ली भारतवर्ष का गौरव है ।।५।।

सब ओर नेहरू और गाँधी के नाम से विख्यात हुई तथा इन्दिरा गाँधी के शासन से भी सुशोभित दिल्ली रही।।६।।

धर्म के मार्ग में अग्रसर रहकर यह दिल्ली इस समय अर्थ के विषय में प्रसिद्ध हो रही है ।।

विश्वबन्धुत्व सन्देश को लेकर वह दिल्ली विश्वमंच पर सम्मानिता हो चुकी है ।।८।।

बगल का शत्रु देश जो इसकी शत्रुता में लगा हुआ है, उसके लिए भी दिल्ली प्रशंसा से युक्त रहती है ।।६।।

ooooo

(८७)

*कवलीकुरुते सकलं कालः ।*

*न कमपि सहते समदं कालः ।।१।।*

*अदितिसुतं दितिसुतमपि सबलम् ।*

*संहरतेऽसकृदुभयं कालः ।।२।।*

*सुविदितयशसं सुललितवपुषम् ।*

*कमपि न मुञ्चति सदयं कालः ।।३।।*

*कृतिनिरतोविश्राम्यति नक्तम् ।*

*न हि लभते विश्रामं कालः ।।४।।*

*गतचलदनागतादिकल्पनम् ।*

*सकलः कुरुते नायं कालः ।।५।।*

*दिनरजनीसुदिवदिमासाब्द-*

*क्रममुररीकुरुतेऽयं कालः ।।६।।*

*गगनचरं पातालगतं वा ।*

*निरीक्षते निखिलं तं कालः ।।७।।*

*गिरिमर्णवमर्णवमपि गिरिवर-*

*मनेकशः कुरुतेऽयं कालः ।।८।।*

**भावार्थ** – काल सब को अपना ग्रास बना लेता है। यह काल अहंकारयुक्त किसी को भी सहन नहीं करता ।।१।।

अदिति सुत (आदित्य अर्थात् देवता) अथवा सबल दिति सुत (दैत्य) दोनों को बार-बार विनाश करता है।।२।।

दयायुक्त विख्यात कीर्तिमान् अथवा सुन्दर शरीरधारी किसी को भी नहीं छोड़ता ।।३।।

काम में लगा हुआ (व्यक्ति) रात को विश्राम करता है। किन्तु काल कभी भी विश्राम नहीं पाता ।।४।।

भूत, वर्तमान और भविष्य आदि की कल्पना सब जन करता, किन्तु यह काल नहीं। अर्थात् काल सदा एक या अखण्ड है ।।५।।

दिन, रात, शुक्ल पक्ष, कृष्ण पक्ष, मास तथा वर्ष का क्रम यह काल

स्वीकृत करता है ।।६।।

आकाश में विचरण करने वाले अथवा पाताल में गए हुए उस सबको काल देखता है ।।७।।

पर्वत को, समुद्र को भी गिरिवर अनेक बार यह काल करता रहता है ।।८।।

ooooo

(८८)

*विलपति यमभगिनी कालिन्दी ।*
*श्रितकृतमलदिल्ली कालिन्दी ।।१।।*
*गिरिवरपतिता भुवि सर्पन्ती ।*
*मिलितराजधानी कालिन्दी ।।२।।*
*निजशुचिपुलिने कृतबहुवसति-*
*श्रमिकारण्यानी कालिन्दी ।।३।।*
*विदितनीलसलिला पुनरत्र च ।*
*सघनतमोरजनी कालिन्दी ।।४।।*
*बलहलहतिभीतेव हि जाता ।*
*मलभरलीनमुखी कालिन्दी ।।५।।*
*विपुलसेतुरिह समदं शेते ।*
*तेन विहितधरणी कालिन्दी ।।६।।*
*विशदभवन विम्बानपि सलिले ।*
*प्रकटयते न नदी कालिन्दी ।।७।।*
*हरिराधायुगलेन समं तट-*
*रासनिरतगोपी कालिन्दी ।।८।।*

**भावार्थ** - यम की बहन कालिन्दी (यमुना) विलाप कर रही । यह यमुना दिल्ली की गन्दगी को धारण करती।।१।।

पर्वत से गिर कर जमीन पर बहती हुई राजधानी दिल्ली आकर यमुना मिलती है ।।२।।

अपने पवित्र किनारे पर अनेक प्रकार से अपना आवास बनाए हुए मज़दूरों का विशाल वन यह यमुना बन गई है ।।३।।

नीले जल से प्रसिद्ध यह यमुना यहाँ (दिल्ली) आकर पुनः सघन अन्धकार वाली रात की भाँति काली हो जाती है ।।४।।

बलराम के हल के प्रहार से डरी हुई मानो यह गन्दगी के बीच छुप कर अपना मुख काला कर लेती है।।५।।

विशाल पुल यहाँ गर्व के साथ बिछा है । उससे यह यमुना जमीन जैसी बना दी गई है ।।६।।

यह यमुना नदी अपने जल में विशाल भवनों के प्रतिबिम्बों को भी (गन्दगी के कारण) प्रकट नहीं कर पाती।।७।।

कृष्ण राधा की जोड़ी के साथ किनारे के उद्यान में रास (केलि क्रीड़ा) में लगी गोपिकाओं वाली कालिन्दी (इस समय भी) देखी जा सकती है ।।८।।

ooooo

(८६)

*उपोषिता जनैर्धिया काशी ।*
*प्रियेत्यसेवि गङ्गया काशी ।।१।।*
*इहाप्तमृत्युरेति निर्वाणम् ।*
*ततोऽप्यनेकसेविता काशी ।।२।।*
*जनैःसमेत्य मन्दिरद्वारम् ।*
*सुघण्टया निनादिता काशी ।।३।।*
*गिरोनिकेतनानि सर्वत्र ।*
*सुपण्डितैश्च मण्डिता काशी ।।४।।*
*दशाश्वमेधमुख्यघट्टेषु ।*
*उषःकृतावगाहना काशी ।।५।।*
*प्रियं पवित्रजाह्नवं वारि ।*
*इहेति शम्भुसेविता काशी ।।६।।*
बभौ पुरातनी कला यत्र ।
दधाति नूतनां च सा काशी ।।७।।

**भावार्थ** - लोग ज्ञान के लिए काशी वास करते हैं। गंगा ने प्रिय मानकर ही काशी की सेवा की । अर्थात् काशी होकर बहने लगी ।।१।।

यहाँ जो मृत्यु प्राप्त करता है वह मोक्ष पा लेता है, इसलिए अनेक लोगों द्वारा काशी सेवित होती है। अर्थात् अनेक लोग काशीवास करते हैं ।।२।।

लोग विश्वनाथ मन्दिर के द्वार पर इकट्ठा होकर सुन्दर घण्टा बजाते हैं इससे यह काशी गुंजित रहती है।।३।।

यहाँ सर्वत्र विद्यालय देखे जा सकते हैं सुन्दर सुयोग्य पण्डितों से यह काशी सुशोभित रहती है ।।४।।

दशाश्वमेघ आदि घाटों पर उषःकाल से सारे लोग गंगा-स्नान करते देखे जा सकते हैं, जिससे लगता है कि पूरी काशी उषःकाल में ही स्नान कर चुकी ।।५।।

पवित्र गंगा का जल शिवजी को अति प्रिय है यहाँ वह सुलभ है। अतः शम्भु (विश्वनाथ) के द्वारा काशी सेवित है ।।६।।

जिस काशी में प्राचीन कला ख्याति पा चुकी थी, वही काशी अभी नवीन कलाओं को भी धारण करती है।।७।।

ooooo

(६०)

*हिमाद्रितुङ्गशृङ्गतोनिपत्य पावनं जलम् ।*
*द्रुतं सरज्जगत्पुनाति तद्धि जाह्नवं जलम् ।।१।।*
*नगाधिराजवर्त्ति भेषजप्रकर्षमुद्वहत् ।*
*करोति रोगमुक्तिमत्रवासिनामलं जलम् ।।२।।*
*पदे पदेऽस्य तीरदेशधर्मधामसङ्कुलम् ।*
*हरत्यशेषकल्मषं सरिद्वराऽमलं जलम् ।।३।।*
*तटस्थनागरं मलं दिवानिशं समुद्वहत् ।*
*प्रयाति मन्दमन्दमेतदर्णवं प्रियं जलम् ।।४।।*
*नगापगाप्रणालिकाम्बु सम्भवच्च गङ्गया ।*
*सदभ्युपैति सागरं प्रशस्यजाह्नवं जलम् ।।५।।*

*विसर्जितो महामदीषु कल्मषातिसञ्चयः।*
*ततोऽधुना न तत्र जानुदध्नमप्यलं जलम् ॥६॥*
*अपाकरोति कल्मषं पवित्रमातनोति यत् ।*
*ततोऽधुना नदीषु कल्मषैरपाकृतं जलम् ॥७॥*

**भावार्थ** -हिमालय के ऊँचे शिखर से गिरकर पवित्र गंगा का जल तीव्र गति से चलता हुआ वह संसार को पवित्र करता है ॥१॥

पर्वतराज हिमालय पर स्थित औषधियों के गुण को ढोता हुआ वह जल यहाँ के निवासियों को काफी हद तक रोगमुक्त करता है ॥२॥

इसके स्थान-स्थान पर किनारे में धार्मिक स्थलों का फैलाव है। श्रेष्ठ नदी का निर्मल जल समस्त पापों को हरता है ॥३॥

किनारे के शहरों की गन्दगी को दिन-रात ढोता हुआ यह प्रिय जल धीरे-धीरे समुद्र को जाता है ॥४॥

पहाड़ी नदियों तथा नालों का जल गंगा से मिलकर सब गंगाजल बन जाता है और साथ-साथ सागर को प्राप्त करता है॥५॥

महानदियों में गन्दगी की ढेर विसर्जित होती है। इसलिये इस समय उन नदियों में घुटने भर भी पर्याप्त पानी नहीं रह पाता॥६॥

यह जल (गंगाजल) पाप को दूर करता है तथा पवित्र भी कर देता है। इसलिए आजकल नदियों में उन पापों (गन्दगी) के द्वारा जल ही दूर कर दिया गया ॥७॥

ooooo

(६१)

*वाति हिमसम्पर्कशीतःशैशिरो वायुः ।*
*याति भानुगभस्तिभीतः शैशिरो वायुः ॥१॥*
*भानुमानागतः सौम्यायनं तं सद्यः ।*
*वारिदेनाछाद्य नीतः शैशिरो वायुः ॥२॥*
*गोकुलं कम्पतेऽद्यापि श्वापदाःखिन्नाः ।*
*शैत्यमादत्ते नदीतः शैशिरो वायुः ॥३॥*
*सद्रिकासच्छलेनोच्छेदितं गिरिगहनम् ।*

*एति नग्नवनावनीतः शैशिरो वायुः ।।४।।*

*आशिषं च निवासवत्यास्तत्र भगवत्याः ।*

*लाति नो विन्ध्याटवीतः शैशिरो वायुः ।।५।।*

*जायते धाराधुना पुलिनायमानेयम् ।*

*याति मौनं जाह्नवीतः शैशिरो वायुः ।।६।।*

*आपणेयाऽङ्गप्रदर्शं कुर्वती बाला ।*

*याति सद्यस्ततो भीतः शैशिरो वायुः ।।७।।*

**भावार्थ** – शिशिर ऋतु की हवा बर्फ से होकर गुज़रने से ठंढी है। लगता है कि यह हवा सूर्य की किरणों से डरी हुई हो ।।१।।

सूर्य, सौम्यायन (उत्तर की ओर) आ गया है, उसे मेघ ने ढक दिया है उसी से होकर शिशिर ऋतु की हवा लाई गई है ।।२।।

गाय समूह काँप रहा है वन्य पशु पक्षी परेशान हैं। लगता है नदियों से शिशिर ऋतु की हवा शीतलता ले आती है ।।३।।

अच्छे विकास के बहाने गिरिगह्वर नष्ट कर दिया गया है। इसलिए खाली जंगल जमीन से होकर यह शिशिर ऋतु की हवा आ रही है ।।४।।

विन्ध्याचल के वन से, वहाँ निवास करने वाली भगवती दुर्गा का आशीर्वाद यह शिशिर की हवा (अब) नहीं ला पाती ।।५।।

यह गंगा नदी की धारा किनारे की भाँति ही केवल बालुकामय हो चुकी है। इसलिए चुपचाप गंगा नदी से होकर यह शिशिर की हवा गुज़र रही है ।।६।।

बाज़ार में अपना अंग प्रदर्शन युवती करती होती है लगता सद्यः उससे डरी हुई शिशिर की हवा लगती है।।७।।

ooooo

(६२)

*वनं मण्डयते वसन्तः ।*

*मनो मोदयते वसन्तः ।।१।।*

*कोकिलाकूजितं हृदयं ।*

*मृदु निवेदयते वसन्तः ।।२।।*

*किसलयेनाच्छाद्य विपिनम् ।*

*मदनमनुनयते वसन्तः ।।३।।*

*कामिनामुद्बोधनं ननु ।*

*अलिरुतैः कुरुते वसन्तः ।।४।।*

*विकसदब्जवनेन शुभ्रं ।*

*सरो भूषयते वसन्तः ।।५।।*

*रसालं शुभमञ्जरीभिः ।*

*अलमलङ्कुरुते वसन्तः ।।६।।*

*पुष्पितैः सर्षपैरवनीम् ।*

*नटीं लम्भयते वसन्तः ।।७।।*

*काञ्चनाभं वपुः सख्याः ।*

*उन्मदं तनुते वसन्तः ।।८।।*

*शोभनं च समोष्णशीतम् ।*

*समयमातनुते वसन्तः।। ९।।*

**भावार्थ** - वसन्त ऋतु वन को सजाता है। वसन्त मन को प्रफुल्लित करता है ।।१।।

वसन्त कोयल की मनोहर कूक को बड़ी कोमलता से निवेदित करता है ।।२।।

वसन्त कोमल नव पल्लव से वन को आच्छादित कर मानो कामदेव को मना रहा है ।।३।।

भ्रमर के गुंजनों से वसन्त मानो कामीजन को जगा रहा है।।४।।

वसन्त खिलते हुए कमल वन से स्वच्छ सरोवर को अलंकृत कर रहा है ।।५।।

वसन्त नई मंजरियों से आम वृक्ष को बहुत अधिक सुशोभित कर रहा है ।।६।।

वसन्त सरसों के फूलों से धरती को नटी बना रहा है।।७।।

नायिका के स्वर्णिम शरीर को वसन्त मदमस्त कर रहा है।।८।।

वसन्त समान गर्मी और ठंढी लाकर समय को मनोहर बना रहा है ।।६।।

०००००

(६३)

*त्वया सञ्चितं तद्धनं कस्य हेतोः ।*
*सखेऽहर्निशं धावनं कस्य हेतोः ।।१।*
*यदेवार्जितं चातिदुःखेन किञ्चित् ।*
*तदाख्यानकं जल्पनं कस्य हेतोः ।।२।*
*यथाशक्ति पैशुन्यमालम्बसे त्वम् ।*
*स्वसम्यग्धियः कीर्त्तनं कस्य हेतोः ।।३।।*
*सुशान्तिक्षमाज्ञानदानार्द्रचित्ते ।*
*रिपुश्चेदुदग्रो बलं कस्य हेतोः ।।४।।*
*प्रचण्डे दुराचारशीले कुपुत्रे ।*
*वसत्यन्तिके चेद् विषं कस्य हेतोः ।।५।।*
*भयं क्रोध आलस्यमुन्मत्तचित्तम् ।*
*अधर्मे रुचिश्चेच्छ्रुतं कस्य हेतोः ।।६।।*
*असत्यं वचः सङ्गति दुर्जनेन ।*
*कुमार्गे गतिर्वन्दनं कस्य हेतोः ।।७।।*
*विनम्रे सदाचारशीले सुपुत्रे ।*
*सुविद्यावदातेऽर्जनं कस्य हेतोः ।।८।।*
*स्वचित्ते शुभे चण्डिकानाम्नि सिद्धे ।*
*ततो मुक्तये चिन्तनं कस्य हेतोः ।।९।।*

**भावार्थ** – हे मित्र ! तुमने किसलिए वह धन इकट्ठा किया है। दिन-रात किसलिए दौड़ रहे हो ? ।।१।।

अत्यन्त कष्ट से जो कुछ भी तूने अर्जित किया है, उसको प्रदर्शित करने

के लिए इतना ढकते क्यों हो ।।२।।

जितनी बन पड़ती उतनी कुटिलता या बेईमानी का सहारा लेते हो, तो अपनी सुबुद्धि का बखान किसलिए करते हो ।।३।।

सुशान्ति, क्षमाशीलता, ज्ञान तथा दान आदि सद्‌गुणों से जिसका हृदय पिघला रहता, तो फिर प्रबल शत्रु भी हो तो, उसे बल किसलिए ? अर्थात् ऐसे व्यक्ति के सामने प्रबल शत्रु कुछ नहीं बिगाड़ सकता है ।।४।।

प्रचण्ड, दुराचारी कुपुत्र के समीप में रहते विष की क्या आवश्यकता अर्थात् ऐसे ही पुत्र कभी भी जान का ग्राहक बन जाता है ।।५।।

भय, क्रोध, आलस्य, उन्माद से युक्त चित्त तथा अधर्म या पाप में यदि रुचि हो तो फिर शास्त्र का ज्ञान किसलिए ? अर्थात् ऐसी स्थिति में शास्त्र का ज्ञान बेकार है ।।६।।

असत्य वाणी (झूठ), दुर्जन के साथ संगति कुमार्ग पर प्रवृत्ति यदि है तो फिर वन्दना किसलिए ? ।।७।।

विनम्र, सदाचारी, सुन्दर विद्या से चमकते चेहरे वाले सुपुत्र के होते धन अर्जन किसलिए ? ।।८।।

अपने हृदय में माँ चण्डिका के नाम को सिद्ध कर लेने पर फिर मुक्ति के लिए चिन्तन किसलिए ? ।।९।।

ooooo

(६४)

*सञ्चिनोति कणमयं वराकः ।*
*लुण्ठतिकोऽप्यतिधनं वराकः ।।१।।*
*कर्षति हलं बीजमथ निवपति ।*
*शस्यमवति सश्रमं वराकः ।।२।।*
*समदमनुभवन् जीवनसुखमिह ।*
*कोऽपि हरति बहुफलं वराकः ।।३।।*
*खादति भोजयते च कुटुम्बम् ।*
*अतिथिमर्चयति सुखं वराकः ।।४।।*

*अपहृतधनमिह रक्षति तत्र च ।*
*छलयति जनगणमलं वराकः ।।५।।*
*श्रमकर्मसु शोणितमपकुरुते ।*
*स्वेदमनल्पं चलं वराकः ।।६।।*
*वातनियन्त्रितभवनयानसुख- ।*
*मुपभुङ्क्ते प्रतिपलं वराकः ।।७।।*
*वर्णधर्मशोषणमाचरितम् ।*
*पुरेति निन्दति भृशं वराकः ।।८।।*
*किमिदानीं तच्छलेन निर्धन-*
*मतितुदति प्रत्यहं वराकः ? ।।९।।*

**भावार्थ** - यह बेचारा दाना चुनता है। किन्तु कोई तो अतिशय धन लूट रहा है ।।१।।

कोई बेचारा हल जोतता है, बीज बोता है, तथा परिश्रम से फसल की रक्षा करता है ।।२।।

कोई तो यहाँ गर्व के साथ जीवन सुखकर अनुभव करता हुआ बहुत सा फल हर लेता है ।।३।।

कोई बेचारा स्वयं खाता है, परिवार का भरण-पोषण करता, अतिथि की सेवा आनन्द के साथ करता है ।।४।।

कोई तो धन का अपहरण कर यहाँ (देश में) तथा वहाँ (विदेश में भी छुपा कर) रखता है और जनता को काफी ठगता है ।।५।।

कोई बेचारा मिहनत के कामों में खून बहाता है तथा काफी पसीना चुआता है ।।६।।

कोई तो वातानुकूलित घर तथा गाड़ी का सुख हरपल भोगता है ।।७।।

"पहले जाति और धर्म के माध्यम से बहुत शोषण कुछ लोगों ने किया है" इस तरह कोई बहुत निन्दा करता है ।।८।।

आजकल हर रोज इसके बहाने गरीब को क्या परेशान नहीं करता ? ।।९।।

ooooo

(६५)

*मोदयसे मुहुरभिनवमोहन ।*
*सुखयति जनिरधिकं तव मोहन ॥१॥*
*तारयसे दुःखाब्धिनिमग्नम् ।*
*सन्त्राता ननु मम भव मोहन ॥२॥*
*रिपुततिविपिनविषण्णमनाथम् ।*
*तारय खलदलवनदवमोहन ॥३॥*
*दुरितजातपरिगतमुन्मदमपि ।*
*जनमुद्धारय यादव मोहन ॥४॥*
*अन्नाद्भूतजातमिह भवति ।*
*इमां विनाप्यन्नामव मोहन ॥५॥*
*करुणार्णव इतिविदितोऽपि त्वम् ।*
*दयसे किं न रमाधव मोहन ॥६॥*
*कारावन्धनमनलं जातम् ।*
*जननमवाधितमिह तव मोहन ॥७॥*
*कंसकुटिलमातुलमुन्मथितुम् ।*
*भवसि कुलिशमिव माधव मोहन ॥८॥*
*कलिमलकलुषितमथ भारतमपि ।*
*त्रातुं साधु पुनर्भव मोहन ॥९॥*

**भावार्थ** - हे अभिनव मोहन (बालकृष्ण) तुम बार-बार आनन्दित करते हो। (कृष्ण रूप में) तेरा अवतार अतिशय सुख प्रदान करता है ।।१।।

हे मोहन ! दुःखरूप समुद्र में निमग्न जन का उद्धार करते हो। अतः मेरा भी रक्षक बनो ।।२।।

हे मोहन ! शत्रु समूह रूप जंगल में विषाद युक्त अनाथ मुझे, शत्रुदल वन के दावाग्नि रूप तुम उद्धार करो।।३।।

हे यादव, हे मोहन ! पाप समूह से व्याप्त, उन्मत्त जन को भी (मुझे भी) उद्धार करो ।।४।।

यहाँ अन्न से जीव समूह उत्पन्न होता है, इसके बिना भी तुम इस धरती की रक्षा करो ।।५।।

हे रमापति मोहन ! तुम करुणा के सागर हो यह विदित है, तो फिर दया क्यों नहीं करते ।।६।।

हे मोहन ! यहाँ (कृष्णावतार के समय) कारावास का बन्धन भी बेकार हो गया तथा तेरा जन्म बाधा रहित सम्पन्न हुआ ।।७।।

हे माधव हे मोहन ! तेरा मामा कंस अत्यन्त कुटिल था, उसका नाश करने के लिए तुम वज्र की तरह कठोर बन गये।।८।।

हे मोहन ! कलियुग के दोष से कलुषित इस भारत देश की भी रक्षा के लिए पुनः अवतार लो ।।९।।

ooooo

(६६)

*गर्जति तथ्यं कोऽपि वराकः ।*
*जरन्नयं क्षुधितोऽपि वराकः ।।१।।*
*सिंहासनमतिकम्पमानमिव ।*
*विचलति नैव ततोऽपि वराकः ।।२।।*
*जनगणमुद्वेजयति सर्वतः ।*
*एकत्रासीनोऽपि वराकः ।।३।।*
*व्रतमाचरति सकलहितसिद्धयै ।*
*त्यजति किमनुनीतोऽपि वराकः ? ।।४।।*
*धनबलपदमदविह्वलचित्तान् ।*
*जागरयति नो सोऽपि वराकः ।।५।।*
*चत्वरगह्वरगोष्ठगुहास्वपि ।*
*असन्नस्ति मनुजोऽपि वराकः ।।६।।*
*किमहिशयनमच्युतमिव गाढम् ।*
*बोधयिता विनतोऽपि वराकः ? ।।७।।*

**भावार्थ** - कोई बेचारा सही बात का गर्जन कर रहा है। भूखा रहकर भी यह बूढ़ा बेचारा ऐसा कर रहा है ।।१।।

सिंहासन यहाँ अत्यन्त काँप रहा है, फिर भी यह आदमी (अन्ना हजारे) विचलित नहीं होता ।।२।।

एक जगह बैठकर भी यह सब ओर जनसमूह को आन्दोलित कर रहा है।।३।।

सबके हित की सिद्धि के लिए यह उपवास कर रहा है। अनुनय विनय करने पर भी क्या है अपना व्रत तोड़ता है ?।।४।।

धन के बल और पद के घमण्ड से उन्मत्त चित्त वाले लोगों को वह फिर भी नहीं जगा पा रहा है ।।५।।

मनुष्य होता हुआ भी वह चौराहे पर घरों में गोष्ठियों में गुफाओं में नहीं होता हुआ भी है ।।६।।

क्या यह विनयशील बेचारा सर्पशय्या पर गाढ निद्रा में सोये विष्णु की भाँति सत्तासीन जन को जगा पायेगा ?।।७।।

ooooo

(६७)

*जरन्नकोपि सत्यं वदत्यद्य सद्यः ।*
*युवानोऽनुवादं ददत्यद्य सद्यः ।।१।।*
*विरुध्यन्ति सङ्कल्पमेतस्य केचित् ।*
*विलोक्येति कश्चिद् हसत्यद्य सद्यः ।।२।।*
*धनं नो प्रभुत्वं न तारुण्यमुग्रम् ।*
*इति व्यक्ति रेषाऽऽलपत्यद्य सद्यः ।।३।।*
*नवे सुप्रभातेऽपि जागृष्व बन्धो ।*
*प्रबुद्धो हि मन्त्रं जपत्यद्य सद्यः ।।४।।*
*सदा येऽवकाशं निजग्रासहेतोः ।*
*उपेत्य प्रमोदं दधत्यद्य सद्यः ।।५।।*
*समत्स्येषु ते पल्वलेषु प्रसन्नाः ।*
*बका आमिषाशं जहत्यद्य सद्यः ।।६।।*
*कुतर्कं वितर्कं सुतर्कं समग्रम् ।*
*विहायैष चाग्रे सरत्यद्य सद्यः ।।७।।*

नयो नूतनो नीयतामाशु मान्यः ।
समत्वं समन्ताद् भवेदद्य सद्यः ।।८।।

**भावार्थ** – कोई बूढ़ा आज साक्षात् सत्य बोल रहा है, और आज साक्षात् युवक लोग भी उसको दोहरा रहे हैं ।।१।।

कुछ लोग (उस बूढ़े के) संकल्प का विरोध कर रहे हैं, यह देख कोई आज सीधे हँस रहा है ।।२।।

(उस बूढ़े के पास) न धन है न प्रभुता है न उग्र युवावस्था है, यह कोई व्यक्ति आज सीधे बोल रहा है।।३।।

हे बन्धु ! नये सुप्रभात में भी जागो । जगा हुआ यह आदमी आज सद्यः मंत्र जाप कर रहा है ।।४।।

अपने ग्रास के लिए जो हमेशा मौका पाकर सद्यः आज खुश हो रहे हैं ।।५।।

वे बगुले आज मछलीयुक्त गड्ढों में भी सीधे आमिष भोजन छोड़ रहे हैं ।।६।।

कुतर्क, वितर्क, सुतर्क सब छोड़कर यह आज सीधे आगे बढ़ रहा है ।।७।।

सर्वमान्य शीघ्र नया कानून लाएँ जिससे सब ओर समानता आज साक्षात् कायम हो सके ।।८।।

ooooo

(६८)

*तुदत्यलं यथा निजं दुःखम् ।*
*सखे तथा न तावकं दुःखम् ।।१।।*
*धनाभिमानिनं तथा दीनम् ।*
*दुनोत्यसंशयं द्वयं दुःखम् ।।२।।*
*धिया विहीन एव न प्रायो ।*
*लभेत पण्डितोप्यलं दुःखम् ।।३।।*

प्रियं सुपथ्यपुष्टिदं भोज्यम् ।
अजीर्णभोजने परं दुःखम् ।।४।।
कुपथ्यकुत्सितं विसृष्टान्नम् ।
बुभुक्षितोऽयमत्यलं दुःखम् ।।५।।
धनेश एष एति पर्यङ्के ।
महार्हशय्याऽधिकं दुःखम् ।।६।।
विनापि शय्यया शयानोऽयम् ।
सुखं परैति कश्मलं दुःखम् ।।७।।
विमृश्य सत् परं विजिज्ञासुः ।
जगद् ब्रवीत्यनुत्तमं दुःखम् ।।८।।
मृतिः सुदुःखदाऽस्ति सर्वत्र ।
क्वचिच्च जन्मसम्भवं दुःखम् ।।९।।
पदोन्नतिं समीक्ष्य किं बन्धो !
उदेति तेऽतिमानसं दुःखम् ।।१०।।
प्रियाकटाक्षवाणविद्धानाम् ।
मनःसु शूलमद्भुतं दुःखम् ।।११।।
सुखानुभूतिमेत्य यद् दैन्यम् ।
जनोऽश्नुते तदद्वयं दुःखम् ।।१२।।
यदात्मवेदनप्रतीपं तत् ।
समासतो बुधै र्मतं दुःखम् ।।१३।।

भावार्थ –जैसे अपना दुःख सताता है, हे मित्र! उस तरह तेरा दुःख नहीं सताता ।।१।।

धन का अहंकार वाले तथा गरीब दोनों को निश्चय ही दुःख सताता है ।।२।।

केवल प्रायः बुद्धिहीन ही नहीं, अपितु पण्डित भी पर्याप्त दुःख प्राप्त करते हैं ।।३।।

अच्छे, सुपथ्य पुष्टिदायक भोजन भी अजीर्ण भोजन होने पर अत्यन्त दुःखदायक है ।।४।।

कुपथ्य निन्दित जूठा अन्न भी भूखा आदमी खाता है, यह पर्याप्त दुःख की बात है ।।५।।

धन स्वामी यह पलंग पर कीमती बिछौने से भी अधिक दुःख पाता है ।।६।।

बिना बिछावन सोया हुआ यह सुख पाता है, यह दैन्य का दुःख है ।।७।।

परम सत्ता का जिज्ञासु पण्डित (दार्शनिक) विचार कर कहता है कि यह संसार सबसे बड़ा दुःख है ।।८।।

सब जगह मृत्यु अत्यन्त दुःखद मानी गई है, किन्तु कहीं जन्म होने से भी दुःख होता है ।।९।।

(आजकल समाज में एकाधिक लड़की का जन्म दुःख का कारण होता है, जो अच्छी बात नहीं है।)

हे बन्धु ! दूसरे की उन्नति देखकर तेरा मानसिक दुःख क्यों होता है ।।१०।।

प्रियतमा के कटाक्ष रूपी बाण से विद्ध जनों के हृदयों में जो चुभन होता है वह अद्भुत दुःख है ।।११।।

सुख का अनुभव करने के बाद जो गरीबी होती, वह अद्वितीय दुःख आदमी भोगता है ।।१२।।

जो आत्म वेदना का प्रतिकूल हो, संक्षेप में पण्डितों ने उसे ही दुःख कहा है।।१३।।

ooooo

(६६)

*सगर्वः समायाति हेमन्तवातः ।*
*हिमानी प्रियो भाति हेमन्तवातः ।।१।।*
*सहस्रांशुरश्मीन् तिरस्कृत्य सद्यः ।*

*प्रगल्भोऽयमाभाति हेमन्तवातः ॥२॥*

*हिमाद्रिप्रयातः प्रकामं प्रसन्नः ।*
*जडत्वं हि पुष्णाति हेमन्तवातः ॥३॥*

*नदीं वाऽथ वापीं समासाद्य तस्याः ।*
*सुशैत्यं दधद्वाति हेमन्तवातः ॥४॥*

*पिधायाखिलं वर्ष्म सुप्तस्य सख्यम् ।*
*हठादद्य गृह्णाति हेमन्तवातः ॥५॥*

*प्रभूताङ्गनाङ्गानि नग्नानि वीक्ष्य ।*
*समाच्छादनं लाति हेमन्तवातः ॥६॥*

*कुटीरे गृहे मन्दिरे मस्ज़िदे वा ।*
*सुहर्म्ये समं वाति हेमन्तवातः ॥७॥*

*तिरस्कृत्य तं यो बलं व्यातनोति ।*
*असून् तस्य मुष्णाति हेमन्तवातः ॥८॥*

*प्रियायाः प्रियप्रेम मानाहतं यत् ।*
*दृढं तद्धि बध्नाति हेमन्तवातः ॥९॥*

*जरद्बालबालाऽबलावीरजातम्*
*पशूंश्चापि क्लिश्नाति हेमन्तवातः ॥१०॥*

*वियोगाकुलाऽऽस्ते निशीथे नवोदा*
*मुधा तां हि मथ्नाति हेमन्तवातः ॥*

न वित्तं न वर्णं कुलं वापि धर्मं ।
न जातिं विजानाति हेमन्तवातः ॥

**भावार्थ** - बड़े गर्व के साथ हेमन्त ऋतु की हवा आ रही है। यह हेमन्तवात अतिशय बर्फीला है ॥१॥

सूर्य किरणों का सद्यः तिरस्कार कर यह हेमन्तवात अति प्रबल प्रतीत हो रहा है ॥२॥

हिमालय से निकला हुआ यह हेमन्त वात अति प्रसन्न है तथा ठंढक पुष्ट कर रहा है ॥३॥

नदी अथवा सरोवर को पाकर उससे अत्यन्त ठंढक धारण करता हुआ यह हेमन्तवात बह रहा है ।।४।।

सारे अंगों को ढककर सोये हुए व्यक्ति की मित्रता आज जबर्दस्ती यह हेमन्तवात ग्रहण कर लेता है। अर्थात् ढके हुए शरीर से भी किसी तरह जा मिलता है, उसे भी जाड़े का अनुभव करा देता है ।।५।।

उनके लिए नारियों के अंग (आजकल) अत्यन्त नंगे होते हैं, मानो हेमन्तवात सही आवरण ले आता है और हेमन्त की बर्फीली हवा के कारण नारियाँ अपने अंगों को सही ढंग से ढककर ही जाड़े से बच पाती है । कम ठंढी में तो न्यूनतम वस्त्रों से ही काम चला लेती है, जिससे अंग प्रदर्शन में बाधा न हो ।।६।।

. कुटी में, घर में, मन्दिर में, मस्ज़िद में या सुन्दर महल में समान रूप से यह हेमन्त की हवा बहती है । अर्थात् हेमन्तवात जाति, धर्म या वर्ग पर विचार किए बिना बहता है ।।७।।

उसका (हेमन्तवात का) तिरस्कार कर जो अपना बल बढ़ाता फिरता है उसके प्राणों को ही हेमन्तवात चुरा लेता है। अर्थात् हेमन्त की बर्फीली हवा का परवाह किए बिना जो व्यक्ति अपना बल प्रदर्शित करता है ऐसे किसी बलशाली की भी जान हेमन्त की हवा ले सकती है ।।८।।

प्रियतमा का अपने प्रियतम से प्रेम यदि मान के कारण व्याहत हो जाता है, उसे वह बर्फीली हवा बड़ी मज़बूती से मिला देती है । अर्थात् प्रेमी-प्रेमिका यदि एक दूसरे से रूठे होते हैं, उन्हें भी आपस में आलिंगनादि के लिए मज़बूर कर देती है। इस तरह दोनों प्रेमी-प्रेमिका को प्रेमपाश में दृढता से बांध देती है।।६।।

बूढ़े, बच्चे, बच्चियाँ नारी, वीरपुरुष तथा जानवरों को भी हेमन्तवात क्लेश पहुँचाता है ।।१०।।

रात को नवविवाहिता अपने प्रियतम के वियोग में व्याकुल होती, उसे भी बेकार हेमन्तवात परेशान करता है। अर्थात् उस पर भी दया नहीं करता ।।११।।

यह हेमन्तवात न धन, न रूप, न खानदान, न धर्म, न जाति को भी जानता है ।।१२।।

ooooo

जालकलुषितमिदं विश्वम् ।
कालकवलितमिदं विश्वम् ।।१।।
कोकिलाकूजितं विरलम् ।
काकवधिरितमिदं विश्वम् ।।२।।
t kह्नवीजलमलं मलिनम् ।
मधुपिपासितमिदं विश्वम् ।।३।।
हेममोहितमखिलमधुना ।
प्रेमविधुरितमिदं विश्वम् ।।४।।
दम्भदलितं दीनवृन्दम् ।
दानवर्जितमिदं विश्वम् ।।५।।
दुर्जनार्जितमाधिपत्यम् ।
साधुविहसितमिदं विश्वम् ।।६।।
हंसकारण्डवविरहितम् ।
बकव्याहतमिदं विश्वम् ।।७।।
रामवर्जितमतिविमुग्धम् ।
कामनर्तितमिदं विश्वम् ।।८।।
कृष्णगीतामृतमपथ्यम् ।
कंसमर्दितमिदं विश्वम् ।।९।।
पारलौकिकभयमवसितम् ।
वञ्चनारतमिदं विश्वम् ।।१०।।
जीवनं वत मानवीयम् ।
वेत्त्यकिञ्चनमिदं विश्वम् ।।११।।
आत्मविध्वंसकविधानैः ।
ज्ञानगर्वितमिदं विश्वम् ।।१२।।

**भावार्थ** - जाल फरेब से अथवा विषाक्त आणविक आदि किरणों के जाल से यह विश्व कलुषित है। लगता है कि इस विश्व को काल ने अपना ग्रास बना लिया ।।१।।

कोयलों की कूक विरल हो चुकी है, किन्तु कौओं के कोलाहल से यह विश्व बहरा हो गया है ।।२।।

गंगा का जल अत्यन्त गंदा हो गया अर्थात् उसे गंदा मानकर लोग अनादर करते हैं। किन्तु यह विश्व मदिरा का प्यासा हो गया है ।।३।।

सोने से (धन-सम्पत्ति) सब इस समय मोहित हैं, किन्तु प्रेम से वंचित यह विश्व हो गया है ।।४।।

(वैभव सम्पन्न जन के) अहंकार से गरीब लोग पीड़ित हैं। यह विश्व दान से रहित हो चुका है ।।५।।

दुर्जनों के द्वारा राजसत्ता अधिकृत है, सज्जन इसे देखकर इस विश्व का उपहास करते हैं ।।६।।

हंस बत्तख आदि से हीन यह विश्व बगुलों से व्याहत है।।७।।

राम से वंचित अत्यन्त मुग्ध यह विश्व कामवासना से नाच रहा है ।।८।।

कृष्ण की गीता अत्यन्त वर्जित हो गई है, कंस रूप दुष्टों के द्वारा यह विश्व पीड़ित है ।।६।।

परलोक का भय समाप्त हो गया है। ठगी में लीन यह विश्व कुछ नहीं समझता है (अर्थात् यत्र तत्र हत्याएँ हो जाती हैं)।।१०।।

आह! मानव जीवन को यह विश्व कुछ नहीं समझता है ।।११।।

अपने आपको (विश्व स्वयं को) नष्ट कर देने वाले आणविक अस्त्रादि के निर्माण कर लेने के कारण यह विश्व अपने ज्ञान के गौरव में दिख रहा है ।।१२।।

ooooo

(१०१)

*वर्षति वारिद उदधितरङ्गे ।*
*नातपमर्दितकृषिभूभङ्गे ।।१।।*
*वैभवचर्चितनाम्नि जने बहु ।*
*वर्षति धनमिव नैव तु रङ्के ।।२।।*

प्रावृषि दुर्दिनमपि सुखमधिकम् ।
आतनुते ननु दयितासङ्गे ।।३।।
श्रावणमासि पथिकवनितानाम् ।
सङ्गमकारिणि कुप्यदनङ्गे ।।४।।
शुष्यतु भूमितलं कृषकाणाम् ।
नो दयते किमु तृषितपतङ्गे ।।५।।
शून्यगृहं ह्यबलाऽधिवसन्ती ।
इत्यभयं सर्पति च भुजङ्गे ।।६।।
शुष्कजलामुपगतवति किं न हि
वर्षसि वारिद सेवितगङ्गे ।।७।।
वारिलवं विपिनेऽभ्रनटोऽयम् ।
विकिरति रसमिव नागररङ्गे ।।८।।
क्षीणनदी रमणीव वियुक्ता ।
मुञ्चतु केन च कृशतामङ्गे ।।६।।

भावार्थ - मेघ समुद्र के तरंग पर बरसता है, किन्तु गर्मी से तपी हुई खेती की जमीन की दरार पर नहीं बरसता है।।१।।

धन-सम्पत्ति के कारण विख्यात नाम वाले व्यक्ति के ऊपर जैसे बहुत धन बरसता, किन्तु गरीब के ऊपर नहीं, उसी तरह मेघ बरसता है ।।२।।

वर्षाकाल में दुर्दिन भी (मेघ से व्याप्त आसमान वाला दिन) निश्चय ही प्रियतमा के संग अतिशय सुख प्रदान करता है ।।३।।

वियोगिनी नायिकाओं को अपने प्रियतमों से संगम कराने वाले काम के कुपित होने पर सावन के महीने में मेघ बरसता है।।४।।

किसानों की जमीन सूखे तो सूखे, किन्तु प्यासे पक्षी पर मेघ दया क्यों नहीं करता ।।५।।

सूने घर में अबला नायिका निवास करती है इसलिए निर्भय होकर कुटिल कामी ससरकर मेघ बरसने पर घुस जाता है।।६।।

हे मेघ, सूखी नदी के समीप गये हुए (रहने वाले) जन पर क्यों नहीं बरसते, किन्तु जो जन गंगा आदि महानदी का सेवन करता है अर्थात् जहाँ जल का अभाव नहीं है उस पर बरसते हो।।७।।

मेघ रूप नट वन में जलविन्दु उसी तरह बिखेर रहा है जैसे नट (नर्त्तक कलाकार आदि) नगरवासियों के रंगमंच पर रस (शृङ्गारादि रस) बिखेरता हो ।।८।।

वियोगिनी नायिका की तरह क्षीण नदी अपने अंग की दुर्बलता किस प्रकार छोड़े, उस तरह का काम मेघ करे।।९।।

ooooo

(१०२)

*सुजनमनोज्ञमिदं मधुचषकम् ।*
*नवरसरुचिरमिदं मधुचषकम् ।।१।।*
*दयिताधरदलमिव रमणीयम् ।*
*युवजनकमनीयं मधुचषकम् ।।२।।*
*शंसति शिरसि निधाय च नृत्यति ।*
*प्रणमति कश्चिदिदं मधुचषकम् ।।३।।*
*प्रियाविलपनं शिशुरोदनमपि*
*वेत्ति न किमपीदं मधुचषकम् ।।४।।*
*क्रूरसबलदुर्मदखलदलमपि ।*
*मनुते तुच्छमिदं मधुचषकम् ।।५।।*
*अरुणितनयनोऽयं बहु गर्जति ।*
*अनासाद्य नियतं मधुचषकम् ।।६।।*
*पूतिगन्धिकृमिचितं शुनापि च ।*
*लीढं स्वदतेऽयं मधुचषकम् ।।७।।*
*प्रबलवीचिसरिदुदके मग्नम् ।*
*अवति निपीय अयं मधुचषकम् ।।८।।*
*रहसि कम्पते काचिदन्तिकम् ।*

वीक्ष्य पिबन्तमिदं मधुचषकम् ॥९॥
विस्मरति प्रियमप्रियमखिलम् ।
अटति निपीय वनं मधुचषकम् ॥१०॥

**भावार्थ** – मदिरा का प्याला बड़े लोग का अति प्रिय होता है। मदिरा का प्याला अभिनव रस या नौ प्रकार के रसों से मनोहर या सुन्दर होता है ॥१॥

प्रियतमा के अधरदल की तरह रमणीय युवाओं को मनोनुकूल मदिरा का प्याला होता है ॥२॥ (शृङ्गार)

कोई इसकी प्रशंसा करता है, माथे पर रखकर नाचता है तथा इस मदिरा के प्याला को प्रणाम करता है ॥३॥ (हास्य)

यह मदिरा का प्याला बच्चे का रोना, पत्नी का बिलखना भी नहीं जानता ॥४॥ (करुण)

क्रूर, प्रबल, घमण्डी दुश्मनों के पक्ष को भी यह मदिरा का प्याला तुच्छ मानता है ॥५॥ (वीर)

निर्धारित मदिरा का प्याला नहीं मिलने पर यह आदमी आँख लाल कर बहुत गरजता है ॥६॥ (रौद्र)

समीप में इस मदिरा के प्याला को पीते हुए आदमी को एकान्त में देखकर कोई बाला काँप उठती है ॥७॥ (भयानक)

सड़े हुए दुर्गन्ध युक्त कीड़े से भरा हुआ तथा कुत्ते से भी चाटे गये मदिरा के प्याला को (यह आदमी) बड़े चाव से पीता है ॥८॥ (बीभत्स)

बड़े विशाल तरङ्ग वाले नदी जल में डूबे हुए को यह व्यक्ति मदिरा का प्याला पी बचा लेता है ॥९॥ (अद्भुत)

मदिरा के प्याला को पीकर (कोई व्यक्ति) अच्छा-बुरा सब को भुलाकर जंगल में भटकता है ॥१०॥ (शान्त)

ooooo

(१०३)

जानकीजानये स्यान्नमोऽहर्निशम् ।
पातकात्पातु मां राघवोऽहर्निशम् ॥१॥
वैभवेनावलिप्तान् सुभार्यानपि ।

काञ्चनं कामिनी कर्षतोऽहर्निशम् ।।२।।
रामवाणहतोऽपिप्रभूतोन्मदो ।
मद्हृदन्तऽर्गतो रावणोऽहर्निशम् ।।३।।
ज्ञानदीपप्रभालोकितं चापि किं ।
बाधते मां मदन्तस्तमोऽहर्निशम् ।।४।।
बाघते किं स कल्माष आदीनवो ।
भक्तिगङ्गाभिषिक्तान् सतोऽहर्निशम् ।।५।।
पङ्कजं भाति शारद्यमेवाहनि ।
काय आलेश्च पद्मोपमोऽहर्निशम् ।। ६।।
रामरामेति मन्त्रं महान्तं मुदा ।
जीवनं यातु मे जल्पतोऽहर्निशम् ।।७।।

**भावार्थ -** जानकीनाथ श्रीराम को दिन रात (मेरा) नमस्कार हो। राघव मुझे दिन रात पाप से रक्षा करें ।।१।।

धन-सम्पत्ति के घमण्ड के चूर तथा सुन्दर पत्नियों से युक्त लोगों को भी कांचन (सोना) तथा कामिनी आकर्षित करती है ।।२।।

राम के बाण से रावण के मारे जाने पर भी मेरे हृदय के अन्तर्गत विराजमान रावण अत्यन्त उन्मत्त है ।।३।।

ज्ञान (आधुनिक विद्या) के प्रकाश से आलोकित होने पर भी क्यों मुझे अन्तःकरण का अन्धकार दिन-रात बाधित करता है।।४।।

वह दैन्य आदि पाप भक्तिरूपी गंगा में नहाए हुए सन्तजनों को भी क्यों बाधित करता है ? ।।५।।

शरद् ऋतु का कमल भी केवल दिन में ही सुशोभित होता है। किन्त सखी (नायिका) का कमल के समान शरीर दिन-रात शोभित होता है ।।६।।

"राम राम" इस महामंत्र को प्रेम से दिन-रात जपते हुए मेरा जीवन गुजरे ।।७।।

ooooo



# लेखक परिचय



डॉ. महेश झा का जन्म 4 फरवरी 1946 ई० में ग्राम पोस्ट पस्टन भाया गनौली जिला मधुबनी, बिहार में हुआ। इनकी माता का नाम श्रीमती भगवती देवी व पिता का नाम श्री वासुदेव झा था। श्री झा जी छात्र जीवन से ही अध्यवसायी रहे हैं तथा कविता व पद्‌य की रचना करना प्रारंभ कर दिए थे। अपनी मेधा के कारण 1985 में रीडर, 1990 में प्रोफेसर व 2003 में विभागाध्यक्ष बने। 28/02/2006 को भागलपुर विश्वविद्यालय से संस्कृत के विभागाध्यक्ष के पद से सेवानिवृत हुए। श्रीमती देवकला झा द्वारा जीवनसंगिनी के रूप में श्री झा जी का प्रायः उत्साहवर्धन किया जाता रहा जिसके परिणामस्वरूप सुललित पद्‌यावली का निरंतर सृजन होता रहा। मातास्वरूपा श्रीमती देवकला झा का छाया चित्र अंकित करना उचित समझता हूँ। श्री झा जी के द्वारा विभिन्न पुस्तक व सुमधुर पद्‌यावलियों से युक्त ग्रन्थ की रचना की गयी। उनमें चण्डिकाशतकम्, सपर्याशतकम्, आर्याशतकम, जाह्नवीस्तोत्रम्, संस्कृतगज़लम्, वसन्तशतकम्, मैथिलीगीता, कुरानपुराणं, गीतापद्‌यानुवाद, मुक्तेश्वरसुप्रभातस्तोत्रम, सुप्रभातस्तोत्रम, मदनेश्वरसुप्रभातस्तोत्रम्, चण्डेश्वरसुप्रभातस्तोत्रम, चण्डिकासुप्रभातस्तोत्रम्, श्रीवैद्‌यनाथसुप्रभातस्तोत्र, श्रीविश्वनाथसुप्रभातस्तोत्र तथा गलज्जलिकाशतकम प्रमुख हैं। सम्प्रति भी लेखक की लेखनी माँ सरस्वती की वंदना में कार्यशील है।

**-डॉ० सीताचरण झा**